सप्तहोतुर्होम इति ॥ सूत्रं बौधायनस्य ॥ षड्ढोतारꣳ हुत्वा सप्तहोतारं जुहुयादिति शालीकिः । ॥

यूपाकृत्ये हवन इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥

वाससामुपकल्पन इति ॥ अष्टाविति बौधायनः ॥ सप्तेति शालीकिः । ॥

कृष्णाजिनानामुपकल्पन इति ॥ पञ्चेति[1] बौधायनः ॥ षडिति[1] शालीकिः । ॥

कृष्णविषाणाया उपकल्पन इति ॥ त्रिवलिरिति बौधायनः ॥ पञ्चवलिरिति शालीकिः ॥ सकलैवैषा स्यादित्यौपमन्यवः । ॥

व्रतप्रदान इति ॥ कꣳस इति बौधायनस्य ॥ मस इति शालीकिः । ॥

प्रवर्ग्यस्य करण इति ॥ स ह स्माह बौधायनो न प्रथमसोमे प्रवृञ्ज्यादुपनामुको हैनमुत्तरो यज्ञो भवतीति ॥ न प्रवर्ग्यं गच्छेच्चनेति शालीकिः । ॥ ७ ॥

तीर्थगमन इति ॥ स ह स्माह बौधायनः प्रदक्षिणमावृत्यैतत्तीर्थं गच्छेद्यामुतो ऽपसलैरावर्ततेत्य॥न्यो ह स्माह शालीकिरपसलैरावृत्यैतत्तीर्थं गच्छेद्यामुतः प्रदक्षिणमावर्ततेति । ॥

---

१ In G पञ्च obtains (see m.) the place of षड् ।

I 157 7 अथास्य प्राङ्मुखस्य दक्षिणं गोदानमद्भिरुनत्तीति ॥ सूत्रं बौधायनस्योभयमेवाप्यस्य मन्त्रेण कुर्यादिति शालीकिः ॥

I 158 1. अभ्यञ्जन इति ॥ सूत्रं शालीकेरन्यो ह स्माह बौधायनो महीनां पयो ऽसीत्यादाय वर्चोधा असि वर्चो मयि धेहीत्यभ्यञ्जीतेति ॥

I 158 4. आञ्जन इति ॥ सूत्रं शालीकेरन्यो ह स्माह बौधायनो वृत्रस्य कनीनिकासीत्यादाय चक्षुष्पा असि चक्षुर्मे पाहीत्याञ्जीतेति[१] ॥

I 158 5 त्रिरनिधाव द्विरुत्तरमप्यु पञ्च कृत्व आङ्क्त इति ब्राह्मणं पञ्च कृत्व एव दक्षिणं पञ्च कृत्व उत्तरमिति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

I 158 7 पवन इति ॥ स ह स्माह बौधायनस्त्रीन्सप्तवर्गान्कृत्वा तेषामेकेन प्राणदेशे पवयेदथेतरेण नाभिदेशे ऽथेतरेण गुल्फदेशे ऽथैनान्यद्भिरभ्युक्ष्योदक्षुत्क्षिदेदित्यन्यो[२] ह स्माह शालीकिर्द्वाभ्यां पवयति त्रिभिः पवयतीत्येतैरेनमेकविंशत्यावघ्राहशः[३] पवयित्वाथैनान्यद्भिरभ्युक्ष्योदक्षुत्क्षिदेदित्यन्यो ह

---

१ Thus Keś only, पाहीत्यंक्त इति G U, ॰त्यांक्त इति D C, the other MSS corrupt. An optative is required.

२ Instead of उत्क्षिदेत्, the reading of Be (and once उत्क्षिते॰ Bu), here and infra, the MSS have उत्क्षिपेत् ।

३ Uncertain, G (sec. m) as given in the text, पवयतीत्येषमेक त्रिंशत्या॰ Bu, पवयतीत्युत्तरैरेवमेकविंशत्या॰ U; पवयतीत्युत्तरैरेकमेषविंशत्या॰ H, पवयतीत्युत्तरैकविंशत्या॰ C D, Be wholly corrupt.

स्माहौपमन्यवः समस्तैरेवैन [1]प्रादेशे पवयेच्चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरिति । देवतायां देवतायामतिवाच्याद्भिरभ्युक्ष्योदश्रुत्विदेदिति[2] । ॥

अथैनꣳ सव्ये पाणावभिपात्येति ॥ दक्षिण[3] इति प्रोक्तं ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥

अथैनमग्रेणाहवनीयं पर्याणयेति ॥ जघनेनेति प्रोक्तं ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

पत्न्या उदानयन इति ॥ सूत्रꣳ शालीकेर्॥त्रो ह स्माह बौधायनः शुचिमेवैनां पवयित्वा सर्वयर्चोदानीय जघनेन गार्हपत्यमुपवेशयेदिति । ॥

पत्न्या दीक्षण इति ॥ सूत्रमाचार्ययोर्॥त्रो ह स्माहौपमन्यवः प्रायणीये हविष्कृदन्ते पत्नीं दीक्षयेदिति । ॥

न यजमानं व्रतमुपनयतीति ॥ सूत्रꣳ शालीकेर्॥त्रो ह स्माह बौधायनः सौमिके तन्त्रे पौरोडाशिकं याजमानमभ्यावर्तेतान्यत्र यज्ञस्य पुनरालम्भादिति । ॥

न पत्नीꣳ सनह्यतीति ॥ सूत्रꣳ शालीकेर्॥त्रो ह स्माह बौधायनो दीक्षणीयायामेनाꣳ संनह्य सꣳस्थितायां विमु-

१ Thus Be, एव not found in G (pr. m.) Bu H U D C, एनं not in G (sec. m.)

२ देवतायां once in Bu D H C

३ °क्षिणत Bu and one copy of the vivarana

I च्याध्वरिकेण सह याजमानेन[1] तन्त्वेतन्त्वे वात[2] ऊर्ध्वं पौरो-
डाशिकेन कर्मणाभिसन्नुयादिति । ॥

I 159 15 ध्रुवाया आप्यायन इति ॥ स ह स्माह बौधायन उभा-
I वेव ध्रुवामाप्याययेतामध्वर्युश्च यजमानश्चेत्य॥ध्वर्युरेव ध्रुवामा-
प्याय्य दीक्षाहुतीर्जुहुयादिति शालीकिः । ॥

I 159 16 दीक्षाहुतीनाꣳ होम इति ॥ सूत्रं बौधायनस्य ॥ चतुर्थ्या[3]
पञ्चमीमनुद्रुत्य जुहुयादिति शालीकिर्॥चो ह स्माहौपमन्यव
आकूत्यै प्रयुज इति तिस्रो ऽनन्तरा हुत्वा सरस्वत्यै पूष्णे ऽग्नय
इत्युपातीत्यापो देवीर्बृहतीर्विश्वशम्भुव इत्येता जुहुयाद्यथौ-
द्ग्रहणमिति । ॥ ८ ॥ तृतीयः ॥

I 160 10 कृष्णाजिनयोरिति ॥ द्वाभ्याꣳ समुब्जिताभ्यां[4] दीक्षये-
दिति बौधायनो । ऽथ[5] यद्यन्यतरत्स्याद्दक्षिणमौर्मं प्रतिषीव्ये-
दित्ये॥कमेव[6] कृष्णाजिनꣳ स्यादिति शालीकिः । ॥

I. 160 11 शुक्लकृष्णयोः संमर्शन इति ॥ शुक्ले ऽङ्गुष्ठो भवति
कृष्णे ऽङ्गुलिरित्येवꣳ शुक्लकृष्णे संमृशेदिति बौधायनः ॥

१ याजमा॰ G and U (sec m) and the vivarana, यजमा॰ the other MSS

२ वात G (sec m) U Be, the vivarana

३ चतुर्थ्या G (sec m) D

४ Thus G (sec m) only, समुच्छिताभ्यां the other MSS

५ Effaced in G

६ इति before एकमेव found in G only (sec. m)

| | | |
|---|---|---|
| Manutikā Saṅgraha, Fasc. 1-3 @ /10/ each ... ... | 1 | 14 |
| Mārkaṇdeya Purāṇa (English) Fasc 1-9 @ 1/- each ... ... | 9 | 0 |
| Mugdhabodha Vyakarana, Vol I, Fasc 1-7, @ /10/ each ... .. | 4 | 6 |
| Nirukta, (2nd edition) Vol. I, Fasc 1-2, @ Rs 1-4 ... .. | 2 | 8 |
| Nityācarapaddhati, Fasc 1-7 @ /10/ each ... ... | 4 | 6 |
| Nityācārapradīpa, Vol I, Fasc 1-8, Vol. II, Fasc 1-4 @ /10/ each ... | 7 | 8 |
| Nyāyabindutīkā, Fasc 1 @ /10/ each ... ... | 0 | 10 |
| Nyaya Vartika Tatparya Parisudhi, Fasc 1-4 @ /10/ each .. | 2 | 8 |
| Nyayasarah ... .. ... ... ... | 2 | 0 |
| Padumāwati, Fasc 1-6 @ 2/ each .. ... ... .. | 12 | 0 |
| Prākrita Paingalam, Fasc 1-7 @ /10/ each .. ... .. | 4 | 6 |
| *Parāçara Smrti, Vol. I, Fasc 2-8, Vol II, Fasc. 1-6, Vol. III, Fasc. 1-6 @ /10/ each ... ... ... ... | 11 | 14 |
| Parāçara, Institutes of (English) @ 1/- each ... ... ... | 1 | 0 |
| Pariksamukha Sutram ... ... ... ... | 1 | 0 |
| Prabandhacintāmani (English) Fasc 1-3 @ 1/4/ each .. | 3 | 12 |
| Rasarnavam, Fasc 1-3 ... . ... ... . | 3 | 12 |
| Ravisiddhanta Manjari, Fasc 1 .. .. ... | 0 | 10 |
| Sadukti-karna-mriti, Fasc 1-2, @ /10/ each . ... ... | 1 | 4 |
| Saddarśana-Samuccaya, Fasc. 1-2 @ /10/ each ... ... | 1 | 4 |
| Samaraicca Kaha Fasc 1-7, @ /10/ each ... .. ... | 4 | 6 |
| Sānkhya Sūtra Vṛtti, Fasc 1-4 @ /10/ each ... .. ... | 2 | 8 |
| Ditto (English) Fasc 1-3 @ 1/- each ... ... | 3 | 0 |
| Six Buddhist Nyaya Tracts ... ... ... .. | 0 | 10 |
| Siva Parinahya ... ... ... .. . .. | | |
| Smriti Prakasha, Fasc. 1 ... ... ... . | 0 | 10 |
| Srāddha Kriyā Kaumudī, Fasc 1-6 @ /10/ each ... | 3 | 12 |
| Sri Surisarvasvam, Fasc 1-2, @ /10/ each ... ... .. | 1 | 4 |
| Suçruta Samhitā, (Eng ) Fasc 1 @ 1/- each . ... . | 1 | 0 |
| Suddhi Kaumudī, Fasc 1-4 @ /10/ each .. ... | 2 | 8 |
| Sundaranandam Kavyam .. ... ... | 1 | 0 |
| Suryya Siddhanta, Fasc 1-2 @ 1-4 each ... ... ... | 2 | 8 |
| Syainika Sastra .. ... ... ... | 1 | 0 |
| Tantra Vārtika (English) Fasc 1-14 @ /1/4 ... ... ... | 17 | 8 |
| *Tattva Cintāmani, Vol I, Fasc 1-9, Vol II, Fasc 2 10, Vol III, Fasc 1-2, Vol IV, Fasc 1, Vol V, Fasc 1 5, Part IV, Vol. II, Fasc. 1-12 @ /10/ each ... ... | 23 | 12 |
| Tattva Cintamani Didhiti Vivriti, Vol I, Fasc. 1-8; Vol II, Fasc. 1-3, Vol III, Fasc 1, @ /10/ each .. .. ... ... | 7 | 8 |
| Tattva Cintamani Didhiti Prakas, Fasc 1-6 @ /10/ each ... ... | 3 | 12 |
| Tirthacintamoni, Fasc 1-4, @ /10/ each ... ... ... | 2 | 8 |
| Trikānda-Mandanam, Fasc 1-3 @ /10/ ... ... ... | 1 | 14 |
| Tul'si Satsai, Fasc 1-5 @ /10/ .. ... ... . | 3 | 2 |
| *Upamita-bhava-prapañca-kathā, Fasc 1-2, 5-13 @ /10/ each ... | 6 | 14 |
| Uvāsagadasāo, (Text and English) Fasc 1-6 @ 1/- ... . | 6 | 0 |
| Vallāla Carita, Fasc 1 @ /10/ ... ... ... ... | 0 | 10 |
| Varṣa KriyāKaumudī, Fasc 1-6 @ /10/ ... ... ... | 3 | 12 |
| Vidhāna Pārijāta, Fasc 1-8, Vol II, Fasc 1 @ /10/ ... ... | 5 | 10 |
| Ditto Vol. II, Fasc 2 6 @ 1/4/ ... .. ... | 6 | 4 |
| Vishahitam, Fasc 1 . ... .. ... ... | 0 | 10 |
| Vivādaratnākara, Fasc. 1-7 @ /10/ each ... .. ... | 4 | 6 |
| Vrhat Svayambhū Purāṇa, Fasc. 1-6 @ /10/ ... ... ... | 3 | 12 |
| Yogaśāstra, Fasc 1-3 ... ... ... ... .. | 3 | 12 |

## *Tibetan Series.*

| | | |
|---|---|---|
| Amarakosah ... ... ... ... ... | 2 | 0 |
| Amartika Kamdhenuh .. ... ... ... ... | 1 | 0 |
| Bauddhastotrasangraha, Vol. I ... .. ... ... | 2 | 0 |
| A Lower Ladakhi version of Kesarsaga, Fasc 1-4, @ 1/- each ... | 4 | 0 |
| Nyayabindu of Dharmakirti, Fasc 1-2 ... ... | 2 | 0 |
| Pag-Sam S'hi Tin, Fasc 1 4 @ 1/- each ... .. ... | 4 | 0 |
| Rtogs brjod dpag hkhri S'iñ (Tib & Sans Avadāna Kalpalatā) Vol I, Fasc 1-11, Vol II, Fasc 1-11 @ 1/- each . .. .. | 22 | 0 |
| Sher-Phyin, Vol I, Fasc 1-5; Vol. II, Fasc 1-3, Vol III, Fasc. 1-6 @ 1/ each ... ... ... ... ... | 14 | 0 |
| Timed-Kun-Din .. ... ... ... ... | 1 | 0 |

## *Arabic and Persian Series.*

| | | |
|---|---|---|
| Amal-i-Salih, or Shah Jahan Namah ... ... .. | 2 | 0 |
| Al-Muqaddasi (English) Vol I, Fasc. 1-4 @ 1/- ... ... | 4 | 0 |
| Āin-i-Akbarī, Fasc, 1-22 @ 1/8/ each ... ... ... | 33 | 0 |
| Ditto (English) Vol II Fasc 1-5, Vol. III, Fasc. 1-5, Index to Vol II, @ 2/- each .. ... ... | 22 | 0 |
| Akbarnāmah, with Index, Fasc 1-37 @ 1/8/ each | | |

| | | |
|---|---|---|
| Catalogue of Arabic Books and Manuscripts 1-2 @ 1/- each ... | 2 | 0 |
| Catalogue of the Persian Books and Manuscripts Fasc. 1-3 @ 1/- each | 3 | 0 |
| Faras Nama, of Hashimi ... ... . ... | 1 | 0 |
| Ditto of Zabardast Khan ... .. ... . | 1 | 0 |
| Farhang-i-Rashidi, Fasc. 1-14 @ 1/8/ each ... | 21 | 0 |
| Fihrist i-Tusi, or Tūsy's list of Shy'ah Books, Fasc 1 4 @ 1/- each | 4 | 0 |
| Gulriz ... ... ... ... ... | 2 | 0 |
| Hadiqatu'L, Haqiqat, (Text & Eng.) ... ... ... | 3 | 8 |
| History of Gujarat ... ... . ... . | 1 | 0 |
| Haft Asman, History of the Persian Masnawi, Fasc 1 @ /12/ each ... | 0 | 12 |
| History of the Caliphs, (English) Fasc. 1-6 @ 1/4/ each ... | 7 | 8 |
| Iqālnamah-i-Jahāngiri, Fasc. 1-3 @ /10/ each ... . | 1 | 14 |
| Isābah, with Supplement, 51 Fasc. @ 1/- each ... ... | 51 | 0 |
| Kashf al-Hujub wal Astār ... ... ... ... | 2 | 0 |
| List of Arabic and Persian MSS 1903-1907 and 1908-1910, @ 1/- each | 2 | 0 |
| Ma'āsir i-Rahimi, Part I, Fasc. 1-4 @ 2 each .. .. ... | 8 | 0 |
| Maāsir-ul-Umarā, Vol I, Fasc. 1-9, Vol II, Fasc 1-9, Vol III, 1-10; Index to Vol. I, Fasc 10-11, Index to Vol II, Fasc 10-12, Index to Vol III, Fasc 11-12 @ /1/ each .. | 35 | 0 |
| Ditto (Eng) Vol I, Fasc 1-6, @ 1/4/ each ... | 7 | 8 |
| Memoirs of Tahmasp ... ... ... ... ... | 1 | 0 |
| Marhamu 'L-Ilali 'L-Mu'Dila, Fasc 1-3 ... ... | 3 | 0 |
| Muntakhabu-t-Tawarikh, Fasc. 1-15 @ 10/ each ... ... | 9 | 6 |
| Ditto (English), Vol I, Fasc. 1-7, Vol. II, Fasc. 1-5 and 3 Indexes, Vol III, Fasc. 2 @ 1/- each .. ... ... .. | 17 | 0 |
| Muntakhabu-l-Lubāb, Fasc 1-19 @ /10/ each... ... ... | 11 | 14 |
| Ditto Part 3, Fasc 1-4 @ 1/- each .. ... | 4 | 0 |
| Persian and Turki Divans of Bayran Khan, Khan Khanan ... | 1 | 0 |
| Qawaninu 's Sayyad of Khuda Yar Khan 'Abbasi, edited in the original Persian with English notes ... ... ... | 5 | 0 |
| Riyāzu-s-Salātin, Fasc 1-5 @ /10/ each ... ... | 3 | 2 |
| Riyāzu s-Salātin, (English) Fasc. 1-5 @ 1/- ... ... ... | 5 | 0 |
| Shah Alam Nama, Fasc 1-2 ... ... ... ... | 2 | 0 |
| Tadhkira-i-Khushnavisan ... ... ... ... | 1 | 0 |
| Tabaquat-i-Nasiri (English), Fasc 1-14 and Index @ 1/- each .. | 15 | 0 |
| Tārikh-i-Firūz Shahi of Ziyau-d-dīn Barni, Fasc 1-7 @ /10/ each .. | 4 | 6 |
| Tārikh-i-Firūzshahi, of Shams-i-Sirāj Aif, Fasc 1-6 @ /10/ each ... | 3 | 12 |
| Ten Ancient Arabic Poems, Fasc 1 2 @ 1/8/ each ... | 3 | 0 |
| The Mabani 'L Lughat A Grammar of the Turki Language in Persian | 1 | 8 |
| Tuzuk-i-Jahangiri (Eng) Fasc 1 @ 1/- ... ... | 1 | 0 |
| Wis o Rāmin, Fasc 1 5 @ /10/ each ... ... | 3 | 2 |
| Zafarnāmah, Vol. I, Fasc. 1-9, Vol II, Fasc 1-8 @ /10/ each ... | 10 | 10 |

## ASIATIC SOCIETY'S PUBLICATIONS.

| | | |
|---|---|---|
| 1. ASIATIC RESEARCHES. Vol XX @ 10/- each ... ... ... | 10 | 0 |
| 2. PROCEEDINGS of the Asiatic Society from 1875 to 1899 (1900 to 1904 are out of stock) @ /8/ per No | | |
| 3. JOURNAL of the Asiatic Society for 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882 (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), 1900 (7), 1901 (7), 1902 (9), 1903 (8), 1904 (16) @ 1/8 per No. to Members and @ 2/- per No to Non-Members. | | |
| N.B.—*The figures enclosed in brackets give the number of Nos. in each year.* | | |
| 4. Journal and Proceedings, N.S., (Nos 1-4 of 1905 are out of stock), 1905—1912 @ 1-8 per No. to Members and Rs. 2 per No. to Non-Members. | | |
| 5. Memoirs, Vol. I (21), Vol II (11), Vol. III (6), Vol IV (1). Price varies from number to number Discount of 25% to Members. | | |
| 6. Centenary Review of the Researches of the Society from 1784-1883 | 3 | 0 |
| 7. Catalogue of the Library of the Asiatic Society, Bengal, 1910 .. | 3 | 0 |
| 8. Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I-III with 8 coloured Plates, 4to, @ 6/- each ... | 18 | 0 |
| 9. Kaçmīraçabdāmrta, Parts I and II @ 1/8/ ... . ... | 3 | 0 |
| 10. Persian Translation of Haji Baba of Ispahan, by Haji Shaikh Ahmad-i-Kirmasi, and edited with notes ... ... .. | 10 | 0 |

*N.B.*—All Cheques, Money Orders, &c., must be made payable to the "Treasurer Asiatic Society," only.

1-1-14.

# BIBLIOTHECA INDICA:

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL

NEW SERIES, No 1415.

# बौधायन श्रौतसूत्रम् ।

# BAUDHĀYANA ŚRAUTA SŪTRAM

A SANSKRIT WORK ON THE VEDIC LITERATURE




EDITED BY

DR. W. CALAND OF UTRECHT.

VOL III. FASCICULUS II

CALCUTTA

PRINTED AT THE BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY, 1, PARK STREET.

1917

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

## No. 1, PARK STREET, CALCUTTA,

AND OBTAINABLE FROM

*The Society's Agent—*

MR. BERNARD QUARITCH, 11, *Grafton Street, New Bond Street, London, W.*

*Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | Rs | As |
|---|---|---|
| Açvavaidyaka, Fasc 1–5 @ -/10/- each | 3 | 2 |
| Advaita Brahma Siddhi (Text), Fasc 1–4 @ -/10/- each | 2 | 8 |
| Advaitachintā Kaustubha, Fasc 1–3 @ -/10/- each | 1 | 14 |
| Agni Purana (Text), Fasc 1–14 @ -/10/- each | 8 | 12 |
| *Aitareya Aranyaka of Rig-Veda (Text), 2–4 @ -/10/- each | 1 | 14 |
| Aitarēya Brāhmana, Vol I, Fasc 1–5; Vol. II, Fasc. 1–5, Vol III, Fasc 1–5, Vol IV, Fasc 1–8 @ -/1 /- each | 14 | 6 |
| Aitareyalocana | 2 | 0 |
| Amarakosha, Fasc 1–2 | 4 | 0 |
| *Anu Bhasyam (Text), Fasc 2–5 @ -/10/- each | 2 | 8 |
| Anumana Didhiti Prasarini, Fasc 1–3 @ -/10/- each | 1 | 14 |
| *Aphorisms of Sandilya (English), Fasc 1 @ 1/- | 1 | 0 |
| Astasāhasrikā Prajñāpāramitā, Fasc 1–6 @ -/10/- each | 3 | 12 |
| Atharvana Upanishads (Text), Fasc. 1–5 @ -/10/- each | 3 | 2 |
| Ātmatattvaviveka, Fasc 1–2 | 1 | 4 |
| Avadāna Kalpalatā (Sans. and Tibetan), Vol I, Fasc 1–11, Vol. II, Fasc 1–11 @ 1/- each | 22 | 0 |
| Bālam Bhattī, Vol I, Fasc 1–2, Vol. II, Fasc. 1 @ -/10/- each | 1 | 14 |
| Bardic and Historical Survey of Rajputana. (A Descriptive Catalogue of Bardic and Historical Manuscripts. Sec I, Prose Chronicles, Part I) | 1 | 0 |
| Bauddhastotrasangraha | 2 | 0 |
| Baudhāyana Śrauta Sūtra, Fasc 1–3, Vol II, Fasc 1–5, Vol. III, Fasc 1 @ -/10/- each | 5 | 10 |
| Bhamati (Text), Fasc. 1–8 @ - 10/- each | 5 | 0 |
| Bhasavrititty | 0 | 10 |
| Bhātta Dīpikā, Vol I, Fasc 1–6; Vol. II, Fasc 1–2 @ -/10/- each | 5 | 0 |
| Bodhicaryāvatāra of Çāntideva, Fasc. 1–7 @ -10- each | 4 | 6 |
| Brahma Sutras (English), Fasc. 1 @ 1/- | 1 | 0 |
| Bṛhaddevatā, Fasc 1–4 @ -/10/- each | 2 | 8 |
| Bṛhaddharma Purāna, Fasc 1–6 @ -/10/- each | 3 | 12 |
| Çatadūsanī, Fasc 1–2 @ -/10/- each | 1 | 4 |
| Catalogue of Sanskrit Books and MSS, Fasc. 1–4 @ 2/- each | 8 | 0 |
| *Çatapatha Brāhmana, Vol. I, Fasc. 1–7; Vol. II, Fasc. 1–5; Vol. III, Fasc 1–7, Vol V, Fasc 1–5 @ -/10/- each | 14 | 6 |
| Ditto Vol VI, Fasc 1–3 @ 1/4/- each | 3 | 2 |
| Ditto Vol VII, Fasc. 1–5 @ -/10/- | 3 | 2 |
| Ditto Vol IX, Fasc 1–2 | 1 | 4 |
| Çatasahasrikā prajñāpāramitā, Part I, Fasc. 1–18, Part II, Fasc. 1 @ -/10/- each | 11 | 14 |
| *Caturvarga Chintāmani, Vol. II, Fasc 1–25; Vol III, Part I, Fasc. 1–18, Part II, Fasc 1–10; Vol IV, Fasc 1–6 @ -/10/- each | 36 | 14 |
| Ditto Vol. IV, Fasc 7 @ 1/4/- each | 1 | 4 |
| Ditto Vol IV, Fasc. 8–10 @ -/10/- | 1 | 14 |
| *Chandah Sutra (Text), Fasc. 1–3 @ -/10/- each | 1 | 14 |
| Çlokavartika (English), Fasc. 1–7 @ 1 4/- each | 8 | 12 |
| *Çranta Sutra of Apastamba (Text), Fasc. 2–17 @ -/10/- each | 10 | 0 |
| *Çranta Sutra of Çānkhāyana, Vol. I, Fasc. 1–7, Vol. II, Fasc. 1–4; Vol. III, Fasc. 1–4; Vol. IV, Fasc. 1 @ -/10/- each | 10 | 0 |
| Çri Bhashyam (Text), Fasc. 1–3 @ -/10/- each | 1 | 14 |

प्रथमेनैवैतꣳ[१]संधिꣳ संमृशेदिति शालीकिर्'' एनमेकाङ्गुल्यैव संमृशेदित्यौपमन्यवः ' ॥

3 कृष्णाजिनस्याभिसर्पण इति ॥ सूत्रꣳ शालीकेर्'' यो ह स्माह बौधायनः पूर्वं वोत्तरं वार्धर्चं विगृह्णीयात्'तृतीयेन मध्यदेशं गच्छेदिति ' ॥

7, 5 आख्यातं ग्रन्थिकरणम् ' ॥

2 अथास्य प्रदक्षिणमुष्णीषेण शिरो वेष्टयतीति ॥ सूत्रं बौधायनस्य '' वाससैव संप्रच्छन्नः स्यादिति शालीकिः ' ॥

4 कृष्णविषाणायाः प्रदान इति ॥ सूत्रꣳ शालीकेर्'' यो ह स्माह बौधायनः समस्तेनैवास्मै मन्त्रेण कृष्णविषाणां प्रयच्छेत्तू'ष्णीं वेद्यन्तमुद्धन्यात्तू'ष्णीं केशान्तमुपस्पृशेदिति ' ॥

9 दण्डस्य प्रदान इति ॥ सूत्रमाचार्ययोर्'' यो ह स्माहौपमन्यवः समस्तेनैवास्मै मन्त्रेण दण्डं प्रयच्छेदुपस्था देवः वनस्पतिरूर्ध्वो[२] मा पाह्योदृच इति[३] ' ॥

1. अथैनं यज्ञस्यान्वारम्भं वाचयतीति ॥ सूत्रꣳ शालीकेर्'' यो ह स्माह बौधायनो महिकरणाः खल्वेते मन्त्रा दृष्टा भवन्ति

---

१ Thus corrected in accordance with the vivarana, which runs प्रथमेन (*sic*) हस्ततलेन, प्रथमेनेवैतं G (sec m), प्रथमेनैवैत Bu, प्रथमेनैवैत UHDC

२ Thus Be, before ऊर्ध्वो H ins इति, D U G C abbreviate the mantra, giving only the first and the last words

३ Thus Be, C D U G H Bu add यजमानः प्रतितिष्ठति, apparently a reminiscence of the text proper (Vol I, 161, 12)

स्वाहा यज्ञं मनसा स्वाहा द्यावापृथिवीभ्याꣳ स्वाहोरोरन्तरिक्षात्स्वाहा यज्ञं वातादारभ इति । ॥

I 161 13 मुष्टिकरण इति ॥ वाचोयमसंयुक्तं[1] मुष्टिकरणꣳ स्यादिति बौधायन ॥ आवान्तरदीक्षायै विसर्गादिति शालीकिः । ॥

I 161 14 आवेदन इति ॥ यथावर्णमावेदयेदिति बौधायनो ॥ ऽदीक्षिष्टायं ब्राह्मण इत्येव ब्रूयादिति शालीकिः । ॥

I. 162 14 व्रतदोहन इति ॥ सूत्रं बौधायनस्यापरदारिकमेव[2] यजमानव्रतꣳ स्यादिति शालीकिः । ॥ ६ ॥

I 163 8 यजुषोरनुषङ्ग इति ॥ आ कृष्णाजिनप्राशनादनुषञ्जेतामिति[3] बौधायन ॥ आवान्तरदीक्षायै विसर्गादिति शालीकिर्॥ दक्षिणानयनादित्यौपमन्यवः[4] । ॥

I 163 11 संवेशनयजुषीति[5] ॥ सूत्रꣳ शालीकेर॥चो ह स्माह बौधायनो ऽग्ने त्वꣳ सु जागृहीत्येव संविशेद्भूतयिष्यन्नप आचामेद्दैवीं धियं मनामह इति । ॥

I 164 12 अथ सनीहाराग्रहिणोतीति[6] ॥ अन्यत्रोग्रशूद्रयोरिति

---

१ Thus G (sec m ) and the vivarana, वाचोयमसं॰ Be H U G (pr m.), वाचंयमसं॰ D C; वाचोयम्यंसं॰ Bu

२ ॰पराद्वा U D H Be C, cp. XXI 19 init

३ ॰षजेतामिति H Bu G U D C, ॰षजेदिति Be

४ Thus Be, the vivarana and Keś, दक्षिणादानादि॰ H Bu G (sec m ) U D C, दक्षिणावदनादि॰ G (pr m ).

५ यजुषोरिति H, यजुषी इति U D C

६ सनी॰ Be, सनि॰ Bu G, संनि॰ D U C, सन्न॰ H.

बौधायनो ॥ ऽन्यत्रोग्नेरिति[1] शालीकिः । सर्वान्यङ्गसिद्धय इत्यौपमन्यवः । ॥

संवेशनयजुःप्रबुद्धयजुःप्रयाणयजुःपर्याणयजुरिति[2] ॥ अनुषङ्गीण्येतानि[3] भवन्तीति बौधायनः ॥ सकृत्कृतान्येवैतान्यह्ने[4] वा रात्र्यै वा स्युरिति शालीकिः । ॥

दक्षिणानां प्रतिग्रह[5] इति ॥ स ह स्माह बौधायनो यस्य कस्य च जातस्य मन्त्रेण प्रतिगृह्णीयात्पुनरप्यागतं[6] मन्त्रेणैव प्रतिगृह्णीयादित्य॥न्यो ह स्माह शालीकिर्यस्य कस्य च जातस्य मन्त्रेण प्रतिगृह्णीयात्प्रतिगृहीतमेव तस्य स्याद।गन्त्वेवास्यात[7] ऊर्ध्वं मन्त्रेणैव प्रतिगृह्णीयादिति । ॥

अविज्ञातायै दान[8] इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

---

१ न्यत्रानग्नेरिति U D C H, on the instrumental cp Speyer Sanskrit Syntax § 107

२ °पर्याण° instead of °परियाण° all

३ Thus Bu U G (sec m) and the vivarana, अनुषंगीद्वेयतानि H G (pr m), अनुषगाण्येतानि Be, D C corrupt

४ सकृत् twice U Be

५ प्रतिग्रह G and U (sec m) and the vivarana, °ग्रहण G (pr m) U (sec. m) and the other MSS

६ Thus H G (pr m) U D C, °थागतं G (sec m), °थागत Bu, °स्यागतं Be

७ Reading, meaning and interpunction doubtful, स्यादागंत्वेवास्यात G (sec m), स्यादागत्वेवास्यात G (pr m), स्यादागतेवास्यात्त Be, स्याद्गत्वेवास्यात U, °दंगत्वेवास्यात्त D, स्याद्गाले° C

८ विदान U D Be C, the passage is missing in H

I 165 10 प्रयाण इति ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

I 165 12 अथ यद्येनं यान्तं व्रतनवेलोपाधिगच्छतीति ॥ मथित्वाग्नीन्विहृत्य व्रतयेदिति बौधायन ॥ उत्तरतोऽरणी निधाय[1] दक्षिणतः परिश्रित्य व्रतयेदिति शालीकिः । ॥

I 165 14 अथ यद्यपर्याणा अप उपाधिगच्छतीति ॥ सूत्रꣳ शालीकेरत्रो ह स्माह बौधायनो यत्रैवापर्याणा अप उपाधिगच्छेत्तज्जपेद्देवीरापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रियावान्मदिन्तमस्तान्वो[2] गृह्णामीति । त्रीन्लोष्टानाददीत । तेषामेकमुदकान्ते निदध्यात्तं वो मावक्रमिषमित्यथान्यं ध्वꣳसयन्ननुद्रवेदच्छिन्नं तन्तुमित्यथान्यमुदकान्ते निदध्यात्पृथिव्या अनु गेषमिति । सं वा गाहते सं वा तरति । सेतुमेव कृत्वात्येतीति ब्राह्मणम् । ॥ १० ॥ चतुर्थः ॥

I 166 11 रोहिते चर्मणीति ॥ सूत्रं बौधायनस्याप्यरोहितꣳ स्यादिति शालीकिः । ॥

I 166 12. अꣳशूग्रहणे हिरण्य इति ॥ कुर्यादिति बौधायनो ॥ न कुर्यादिति शालीकिः । ॥

I. 167 2 देवयजनस्याध्यवसान इति ॥ सूत्रमाचार्ययोरत्रो ह स्माहौपमन्यवः पुरस्तादेवैतत्त्रैविध्यगतेषु देवयजनमध्यवसेद्विज्ञायते या वा इयꣳ सर्वैव वेदिरिति । ॥

I 167. 4 III 20 9. (?) आख्यातं प्रायणीयस्य निर्वपणम् । ॥

---

१ After निधाय U Be ins तस्या, C D तस्य ।

२ तान्वो G D C Be, the vivarana; तंवो H U, Bu defective

प्रायणीयस्य श्रपण इति ॥ पयसि श्रपयेदिति बौधायनो ऽप्स्विति शालीकिः ॥

प्रायणीयस्यासादन इति ॥ षड्ढोत्रासादयेदिति बौधायनस्तूष्णीमिति शालीकिः ॥

प्रायणीयस्य चर्याया इति ॥ उपांशु चरेदिति बौधायन उच्चैरिति शालीकिः ॥

आदित्यस्योदीक्षण इति ॥ हिरण्यमन्तर्धायादित्यमुदीक्षयेदिति बौधायनो ऽनन्तर्धायैवेति शालीकिः ॥

सोमक्रयण्या अतिवित्सन इति ॥ सदसः काले ऽतिवित्सयेदिति बौधायन उपरवकाल इति शालीकिः ॥

सोमक्रयण्यै पदस्यानुनिक्रमण[1] इति ॥ अतिक्रान्तायै पृष्ठ्याकालं दक्षिणस्य पूर्वपदस्यानुनिक्रामेदिति[1] बौधायनो महावेदिमेवातिक्रान्तायै यस्यैव[2] कस्य[2] चेति[2] शालीकिः ॥

सोमक्रयण्यै पदस्य परिलेखन इति ॥ सूत्रं शालीकेरथो ह स्माह बौधायन स्फ्येन च कृष्णविषाणया च पदं परिलिखेदन्तरतः कृष्णविषाणा स्यादिति ॥ ११ ॥

उदपात्रस्योपनिनयन इति ॥ प्रदक्षिणमुपनिनयेदिति बौधायनो यथोपपादमिति शालीकिः ॥

---

१ °नुनिक्र° all (C D only °नुनिष्क्र°), this reading (given by Ti) is also to be restored VI 12 : 169 16, see TS VI 1 8 1

२ यस्यैव कस्ये वेति Bu G (sec m.), यस्ये कस्य चेति Be, यकस्य चेति C H D G (pr m)

I 171 1 राज्ञ उपस्थान इति ॥ स ह स्माह बौधायन उषसा[१] नामेयमोषधिर्भवति[१] । तां दूतीं कुर्वीतैष ते गायत्रो भाग इति मे सोमाय ब्रूतादेष ते त्रैष्टुभो भाग इति मे सोमाय ब्रूतादेष ते जागतो भाग इति मे सोमाय ब्रूताच्छन्दोमानाꣳ साम्राज्यं गच्छेति मे सोमाय ब्रूतादित्य ॥ त्रो[२] ह स्माह शालीकिः प्रत्यक्षः खल्वयꣳ राजा भवति प्रत्यक्षवदेवोपतिष्ठेतैष ते गायत्रो भाग एष ते त्रैष्टुभो भाग एष ते जागतो भागश्छन्दोमानाꣳ साम्राज्य गच्छेति । ॥

I 171 9 राज्ञो मान इति ॥ सूत्रं बौधायनस्य ॥ निगदन्नेवैतामृचं पञ्च कृत्वो मिमीतेति[३] शालीकिः । ॥

I 172. 5. राज्ञः पणन[४] इति ॥ सूत्रं बौधायनस्य ॥ गवा ते क्रीणानीत्येव ब्रूयादिति शालीकिः । ॥

I 172 8 अजाया उपनिग्रहण इति ॥ सूत्रं बौधायनस्य ॥ नुपनिगृह्णन्नेवाजां मन्त्रं जपेदिति शालीकिः । ॥

I 197 1 मैत्रावरुणस्य दण्डप्रदान इति ॥ सूत्रमाचार्ययोर ॥ त्रो ह

---

१ Instead of उषसा नामेय० H C D U read उपस्थाना श्रय० ।— ओषधिर्भ० G (sec m ), ओषधीर्भ० H Bu C D U (pr m ), ओषधीभिर्भ० Be U (sec m )

२ The mantras are given partially abbreviated in the MSS

३ मिमीते इति or मिमीत इति MSS.

४ Thus Bu G (sec m ) and the vivarana , पण Be H C D U G (pr. m )

स्याद्वौपमन्यवः सोमविक्रयिणमुदकुम्भेनोपद्रुत्याचैव[१] मैत्रावरुणाय दण्ड प्रयच्छेदिति ॥

1. राज्ञः प्रत्यानहन इति ॥ अन्तर्लोम्ना चर्मणा प्रत्यानह्येदिति बौधायन ॥ ऊर्ध्वग्रीवेण बहिर्लोम्नेति शालीकिः ॥

५ ईषाया अन्वारम्भ इति ॥ सूत्रं बौधायनस्यानन्वारभ्यैवेषां प्रत्यङ् द्रवन्मन्त्रं जपेदिति शालीकिः ॥

3 राज्ञः परिवहण इति ॥ प्रदक्षिणं परिवहेदिति बौधायनो ॥ यथोपपादमिति शालीकिः ॥

7 राज्ञः प्रत्युपस्थान इति ॥ स ह स्माह बौधायनो व्रीहिभिस्सारणीभ्यां च राजासन्द्या च राजान प्रत्युपतिष्ठेतेत्यथो ह स्माह शालीकिरजेन च कर्णगृहीतेनोल्मुकेन[२] च[२] राजासन्द्या च राजानं प्रत्युपतिष्ठेत सो ऽग्नीषोमीयः पशुः स्याल्लोहः[३] स्यात्तूपरः स्यात्षण्ढः स्याच्छ्मश्रुमान्स्यात्पीवान्स्यादिति[४] विज्ञायते ॥ १२ ॥

---

१ सोमक्रयणम् instead of सोमविक्रयिणम् G (sec m), सोमक्रयिणम् U D H C — °भेनोपद्रुत्या° Bu G (sec m), °भेनोपप्रद्रुत्या° C D H (sec m.) °भेनोमद्रुत्या H (pr m)

२ °हीतेन लोमशेन U D H C, °हीतेन लोमकेन G

३ लोहः Bu G and the vivarana, लोमशः H D U C.

४ श्मश्रुमान् G Bu, viv, fails in H U, D Be are defective — पीवाम Bu U (pr m.), viv, पीनवान् Be U (sec m), पीसमवा H, D C defective, fails in G (sec m, first hand invisible) N. B nomin पीवान् as Mahābh., not पीवा।

I. आतिथ्यस्य बर्हिषः संस्कार इति ॥ असिदादानप्रभृती- न्मन्त्रान्साधयेदिति बौधायनः ॥ शुल्बप्रभृतीनिति शालीकिः ॥ संभरणप्रभृतीनित्यौपमन्यवः । ॥

I 174 12 आतिथ्यस्य निर्वपण इति ॥ सूत्रं शालीकेर॥न्वो ह स्माह बौधायन उभौ विमुच्य राजानं प्रपाद्यातिथ्यं निर्वपेदिति । ॥

I 175 14 राज्ञः परिचर्याया इति ॥ सूत्रं शालिकेर॥न्वो ह स्माह बौधायन स्वचैव राजानं परिचरेदृचार्घ्यमुपनिगृह्णीयादिति । ॥

I 175 17 अर्हण इति ॥ यथागतमर्हयेदिति बौधायनो ॥ राजान-
I मर्हयिलर्त्विजो[1] ऽर्हयेदिति शालीकिः । ॥

I 175 19 आतिथ्यस्य करण इति ॥ पुरोडाशस्य गौस्स्यातामिति
I बौधायनः ॥ पुरोडाश एवेति शालीकिः । ॥

I 176 10. आज्यग्रहाणां ग्रहण इति ॥ चतुर्गृहीतानि वा पञ्च-
I गृहीतानि वा स्युरिति बौधायनः ॥ पञ्चगृहीतान्येवेति शालीकिः । ॥

I 1 I 176 18 आतिथ्यस्यासादन इति ॥ चतुर्होत्रासादयेदिति बौधा- यनस्तू॥ष्णीमिति शालीकिः । ॥

I 176 19 आतिथ्यस्य चर्याया इति ॥ उपांशु चरेदिति बौधा- यन ॥ उच्चैरिति शालीकिः । ॥

I 177 19. तानूनप्त्रस्य भक्षण इति ॥ सूत्रं शालीकेर॥न्वो ह स्माह

---

१ यथागतम॰ instead of राजानम॰ G U, C D and H are defective.

बौधायनो निगुप्तमेवैनं[1] निधापयित्वा व्रतकाले व्रतेन सह भक्षयेदिति ॥

६ औपसदस्य बर्हिषः सꣳस्कार इति ॥ असिदादानप्रभृतीन्मन्त्रान्साधयेदिति बौधायनः ॥ शुल्बप्रभृतीनिति शालीकिः ॥ संभरणप्रभृतीनित्यौपमन्यवः ॥

उपसदां मन्त्रामन्त्र इति ॥ मन्त्रवत्यः स्युरिति बौधायनस्तूष्णीका इति शालीकिर्यत्पर्याध्यं[2] तत्तूष्णीकꣳ[2] स्याद्येतरन्मन्त्रवत्स्यादित्यौपमन्यवः[2] ॥ सर्वमेवैतत्कर्मावृता कुर्यादित्यौपमन्यवीपुत्रः ॥

७ आहुतीनाꣳ होम इति ॥ सूत्र बौधायनस्य ॥ प्राचीरेवैता आहुतीः सꣳस्थापयेदिति शालीकिः ॥

८ उपसदाꣳ[3] होम इति ॥ सूत्र बौधायनस्यानत्याक्रम्यैवोपसदो[4] जुहुयादिति शालीकिः ॥

स्रुचां परिशायन इति ॥ अहोरात्रं परिशयीरन्निति बौधायनोऽहरेवेति शालीकिः ॥ कर्मणःकर्मणः प्रयुञ्जीतेत्यौपमन्यवः ॥ १३ ॥ पञ्चमः ॥

१ निगुप्त॰ Bn G and U (sec. m.), the viv.; गुगुप्त॰ Be U (pr. m.), G (pr. m.) H D C.

२ Thus G (sec. m.) only, the vivarana of the text proper, and Ke. (पर्याध्यम् = प्रधानम् Viv.). All the other MSS. are more or less corrupt.

३ Thus Bn H G D C; ॰सदो Be U.

४ Thus Bn H U G (pr. m.) D C; ॰सदा G (sec. m.); ॰सदं Be

I 182 13 स्तम्बयजुषो हरण इति॥ सूत्रं बौधायनस्यौपरवकाला- दप्याग्नीध्रो हरेदिति शालीकिः ।॥

I 183 1, III 57 4 आख्यातं चात्वालस्य परिलेखनम्॥

III 57 7 आख्यातं लोकाग्नीनाꣳ हरणम्॥

I 215 5 (?) स्फ्यविघनानामुपस्थान इति॥ सूत्रꣳ शालीकेर्॥न्वो ह स्माह बौधायनो ऽग्निवत्युत्तरं परिग्राह परिगृह्य योयुपित्वा तिर्यञ्चꣳ स्फ्यꣳ स्तब्ध्वा यजमानमुत्करे स्फ्यविघनानुपस्था- पयेदिति ।॥

I अग्नीषोमीयस्य बर्हिषः सꣳस्कार इति॥ असिदादान- प्रभृतीन्मन्त्रान्साधयेदिति बौधायनः॥ शुल्बप्रभृतीनिति शालीकिः॥ संभरणप्रभृतीनित्यौपमन्यवः ।॥

I अग्नीषोमीयस्य पशोरनुसव्रज्याया इति॥ अनुसव्रजेदिति बौधायनो॥ नानुसंव्रजेदिति शालीकिः ।॥

I I. 183 18 इध्माबर्हिषोरुपसादन[1] इति॥ सूत्रमाचार्ययोर्॥न्वो ह स्माहौपमन्यवो ऽत्रैवास्मा आग्नीनायेध्माबर्हिराहरेत्तंदादाय प्राङियात्कुशहस्तस्य[2] पृष्ठ्याकालं प्राङ् स्तृणन्गच्छेदिति[3] ।॥

---

१ ॰रुपकल्पन the vivarana

२ Thus G (sec m) Be, प्रांदीयात्कुश॰ Bu प्राङ्ग्यात्कुश॰ C′, प्राङ्ङित्यात्कुश॰ U G (pr m), प्राङित्याकु॰ H, प्राङ्केत्यकुश॰ D C

३ Thus G C U C′, स्रोनगच्छे॰ Bu, स्तृपनगच्छे॰ H, स्तृपनागच्छे॰ Be, स्तृपंनागच्छे॰ D

3 हविर्धानयोरभ्यावर्तन[१] इति ॥ काष्ठानि वा तृणानि वान्तर्धायाभ्यावर्तयेदिति[१] बौधायनो ॥ ऽनन्तर्धायैवेति[२] शालीकिः । ॥

4 हविर्धानयोः प्रोक्षण इति ॥ तूष्णीꣳ सꣳस्कृताभिरद्भिः प्रोक्षेदिति बौधायनः ॥ कमण्डलुभिरिति[३] शालीकिः । ॥

13 वर्त्मनोरभिहोम इति ॥ सूत्रमौपमन्यवीपुत्रस्योभौ ह स्माह बौधायनो दक्षिणस्य हविर्धानस्य वर्तनिमभिजुहुया-त्सर्वा[४] अक्षधुर उपाञ्ज्यात्सर्वतस्य परिमृशेदित्युभौ ह स्माह शालीकिः सर्वा एव वर्तनीरभिजुहुयात्सर्वा अक्षधुर उपाञ्ज्या-त्सर्वतस्य परिमृशेदिति । ॥

16 मेथ्योर्निहनन इति ॥ स ह स्माह बौधायनो दक्षिणस्य हविर्धानस्य दक्षिणतो मेथीं निहन्यादुत्तरस्य दक्षिणत इति ॥ दक्षिणतश्चोत्तरतश्चेति शालीकि ॥ मध्य इत्यौपमन्यवः । ॥

10 दार्वाहनां परिषीवण[५] इति ॥ सर्वान्दार्वाहनमन्त्रेण परि-षीव्येदिति बौधायनः ॥ पूर्वौपूर्वाविति शालीकिर्दक्षिणौ-दक्षिणावित्यौपमन्यवः । ॥ १४ ॥

---

१ ०भ्यववर्तये० G (sec m) and the vivarana, this might, after all, be the correct reading also VI 24 184 3 (चाभ्यववर्तयन्ति)

२ Thus G (sec m) C′, नान्तर्धा० the other MSS

३ कमंडलूभि० G (sec m), cp Pān IV 1 71

४ Emended, वर्तन्यामभि० H Be G U D C′, वर्तन्या अभि Bu

५ Thus C D H G (pr m), ०षिव्यण Be C′, ०व्ययण Bu G (sec m) and the vivarana

I 189 1 औदुम्बर्या अभिहोम इति ॥ सूत्रमौपमन्यवीपुत्रस्याचो ह स्माह बौधायन एवमेव जुहुदन्तर्धाय[१] हिरण्यमभिजुहुयादित्युभयोरेव विशाखयोर्हिरण्ये[२] निधायाभिजुहुयादिति शालीकिः ॥

I 197 8 वसतीवरीणां ग्रहण इति ॥ सूत्रं शालीकेराचो ह स्माह बौधायन उभयतःशुक्रा आदित्यवतीर्वसतीवरीर्गृह्णीयात्ताः शुक्रास्ताभिराप्याययेत्ताभिरभिषुणुयादिति[३] ॥ धिष्णियान्व्युप्य वसतीवरीर्गृह्णीयादित्यौपमन्यवः ॥

I. 190. 18 उपरवाणां परिलेखन इति ॥ त्रिस्त्रिरेकैकं परिलिखेदिति बौधायनः ॥ सकृत्सकृदिति शालीकिः ॥

I 191 7. उपरवपांसूनां हरण इति ॥ सूत्रं शालीकेराचो ह स्माह बौधायनो यजमानस्याधस्पदमुपोप्योत्करं ह्लोपस्पृशेदिति[४] ॥

I 192 1 उपरवाणां प्रोक्षण इति ॥ त्रिस्त्रिरेकैकं प्रोक्षेदिति बौधायनः ॥ सकृत्सकृदिति शालीकिस्त्रिस्त्रिरपो ऽवनयेत्तस्मिन्यवान्प्रस्कन्दयेदित्येवमेवैतत्त्रिविधं कर्म कुर्यादित्यौपमन्यवः ॥ सर्वमेवैतत्कर्मावृता कुर्यादित्यौपमन्यवीपुत्रः ॥

---

१ ०दन्तर्धाय G (sec m), rightly ?

२ Thus Bu G, the viv and Keś, ०ण्य Be H U D C C′

३ ०स्ताभिरेवाप्या० G (sec m).

४ Thus Bu C′ U C D G (sec. m), ङ्लो० H, ड्लो० Be

13 दक्षिणानां दान इति ॥ स ह स्माह बौधायनो मरुत्विग्भ्य एना[१] दद्यान्न होत्रकाननुसंचरेरन्निति ॥ न च होत्रकाननुसंचरेरन्न च सदस्याय दद्यान्न ह्येतस्यानुख्या विज्ञायत इति शालीकिः । ॥

28 मरुत्वतीययोर्होम इति ॥ स ह स्माह बौधायनो यमेवाध्वर्युर्जुहुयात्स वषट्कृतानुवषट्कृतः स्यादथेतरो ऽननुवषट्कृतः[२] स्यादित्यु । भावेवाननुवषट्कृतौ[३] स्यातामिति शालीकिरु ॥ भावेवानुवषट्कृतौ स्यातामित्यौपमन्यवः । ॥

13 तृतीयस्य मरुत्वतीयस्य ग्रहण इति ॥ सूत्रमाचार्ययोर् ॥ न्नो ह स्माह दीर्घवात्स्यो मुख्येनैनं पात्रेण गृह्णीयादिति ॥ ॥

35 नाराशꣳसानामनुप्रकम्पन इति ॥ अनुप्रकम्पयेरन्निति बौधायनो ॥ नानुप्रकम्पयेरन्निति शालीकि ॥ र्नैनानुपोद्यच्छेरꣳस्नेत्यौपमन्यवः । ॥

42 सौम्यस्य मन्त्रामन्त्र इति ॥ मन्त्रवान्स्यादिति बौधायनस्तू ॥ ष्णीक इति शालीकिः ॥ सौम्य एव मन्त्रवान्स्यात्तूष्णीक एककपाल इत्यौपमन्यवः । ॥

11 तार्तीयसवनिके ऽभिषव इति ॥ सूत्रं बौधायनस्य ॥ यदाप्याययति तेनाꣳशुमदित्येव ब्रूयादिति शालीकिः । ॥

---

१ एना Bu G, एता H Be C′ U D C, एव the vivarana

२ Emended, नानुव॰ or नानव॰ MSS

३ Thus Be C′ U, ॰भावेवानु॰ H D C, ॰भावेव वषट्कृतानुवषट्कृतौ G (sec. m.)

I 245 19 आदित्यग्रहस्य ग्रहण इति ॥ सूत्रꣳ शालीकेरत्रो ह स्माह बौधायनः पुरस्तादेनमभिषवाद्गृह्णीयात्तूष्णीꣳ[1] शृतातङ्क्यमवनयेदिति ॥

I 246 12 आदित्यग्रहस्योदाहनन इति ॥ अर्धर्चश उदाहन्यादिति बौधायन ऋचर्चेति शालीकिः ॥

I 247 11 मैत्रावरुणस्य श्रयण[2] आशिरो[2] ऽवनयन[2] इति ॥ सूत्रꣳ शालीकेरत्रो ह स्माह बौधायनः श्रीणीयादेव मैत्रावरुणं पयसाशिरमवनयेदिति ॥

I 248 5 नवम्यां प्रस्तुतायां वाचयतीति ॥ सूत्रं बौधायनस्य यस्यामेव कस्यां चिद्वाचयेदिति शालीकिः ॥

I 249 17, 250 6 होत्रकाणाꣳ[3] संतर्पण इति ॥ सूत्रꣳ शालीकेरत्रो ह स्माह बौधायनो ऽनुसवनमेव होत्राः[4] संतर्पयेदिति पञ्च प्रातःसवने षण्माध्यंदिने सवने सप्त तृतीयसवन इत्यौपमन्यवः ॥

I. 251. 1 औपासनेष्विति ॥ स ह स्माह बौधायनो ऽनुसंभज्यौपासनाननुमन्त्रयेत चमसेभ्यश्च पुरोडाशशकलानुपास्येच्च चैव

---

१ पुरस्तादेवाभि° G (sec. m.), पुरस्तादेवमभि° D C H

२ Emended, श्रयणाशिरोवनयन Bu G and the vivarana, श्रयणाशिरःशोरवनयन H U D C, श्रयणीशिरोवनयन Be C′

३ होत्रकाणां Be G (sec. m.) C′, the vivarana, होत्राणां Bu, होत्रणां G (pr. m.), होतॄणां H U D C

४ होत्राः Bu G (sec. m.), होत्रकान् Be C′ H U D C G (pr. m.)

षड्ढोतारं व्याचक्षीतेत्य''न्यो ह स्माह शालीकिरनुसंप्रज्यैवौपासनाननुमन्त्रयेत पार्श्वतश्चमसेभ्यः[1] पुरोडाशशकलानुपास्येदुपरिष्टाच्च षड्ढोतारं व्याचक्षीतेति ' ॥ २२ ॥ नवमः ॥

1 6 सावित्रस्य ग्रहणे सादन इति ॥ सूत्र बौधायनस्य ' सजुष्टं परिमृज्य सादयेदिति शालीकिः ' ॥

3 5 तदन्यतो-मदं प्रतिगृह्णातीति ॥ सूत्र बौधायनस्य '' मदा मोद[2] इवेत्येव[2] प्रतिगृह्णीयादिति शालीकिः ' ॥

11 नाराशंसानामनुप्रकम्पन इति ॥ अनुप्रकम्पयेरन्निति बौधायनो ' नानुप्रकम्पयेरन्निति शालीकि''र्नैनानुपोद्यच्छेरंस्वनेत्यौपमन्यवः ' ॥

सौम्यस्य चर्याया इति ॥ उपांशु चरेदिति बौधायन '' उच्चैरिति शालीकिः ' ॥

5 सौम्यस्य परीज्याया इति ॥ स ह स्माह बौधायनो यदि चैव[3] समस्तौ यदि च विहृतावग्नाविष्णू उपांश्वेव स्यातामिति '' समस्तावुपांशु विहृतावुच्चैरिति शालीकिः ' ॥

12 तार्तीयसवनिकानां धिष्णियानां विहरण इति ॥ सूत्रं शालीके''रन्यो ह स्माह बौधायनश्चरित्वा वाचरित्वा वा सौम्येनाङ्गारैश्चतुर्धिष्णियान्विहरेदिति ' ॥

---

१ पार्श्वत॰ om Be C′

२ मोदेवेत्येव G (sec m) only

३ एव om Be Bu D U (pr m).

I 254 6. पात्नीवतस्य श्रयण इति ॥ सूत्रं बौधायनस्य ॥ दध्ना वा पयसा वा पात्नीवतꣳ श्रीणीयादिति शालीकि॥ धिष्णियानां व्याघारणशेषेणाज्येन पात्नीवतꣳ श्रीणीयादित्यौपमन्यवः । ॥

I 254. 14 पत्न्या उदानयन इति ॥ सूत्रं बौधायनस्य।नैवासीतापोऽभिहिष्ठीयाभ्य इति शालीकिः । ॥

I 255 14 तदुभयतो-मदं[१] प्रतिगृणातीति ॥ सूत्रं बौधायनस्य ॥ मोदा मोद[२] इवेत्येव[२] प्रतिगृणीयादिति शालीकिः । ॥

I 255 17 ध्रुवस्य प्रच्यावन इति ॥ सूत्र बौधायनस्य ॥ सर्व एवैषोऽवनयनमन्त्रः स्यादिति शालीकिः । ॥ २३ ॥

I 256 14 चमसानामायातन[३] इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीके: ॥

I 256 15 तेषु त्रीꣳस्त्रीꣳश्च दूर्वाग्रन्थीन्प्रास्यत्येकैकं च दर्भपुञ्जीलमिति ॥ सूत्रं बौधायनस्य।द्भिरेवैते दद्याः[४] स्युरिति शालीकिः । ॥

I. 256 21. औपयजेष्विति ॥ सूत्रꣳ शालीकेर॥चो ह स्माह बौधायन आग्नीध्रादग्नीषोमीयस्य[५] च सवनीयस्य चाङ्गारानाहरेच्छामित्रान्नैचावरुणे वशाया इति । ॥

१ ०मदं all, against VIII, 15 255 14

२ मोदेवेत्य० G D C C′

३ ०मायतन all exc C

४ ? दद्या Bu C′, द्रष्व्याः G (sec m ), 'दश्वा Be, H U D C omit the word altogether The vivarana has अद्भिरेव साधवो दर्भनीया इति ।

५ Thus, and comp vol I l c , H G U (pr m ) C D, the vivarana, ०ग्नीध्रीया० Be C′ U (sec m ) Bu Keś

3 8 मिन्द्राकृत्योर्होम इति ॥ सूत्रमाचार्ययोर्॥श्चो ह स्माहौपमन्यवः पुरस्तान्निन्द्राकृती जुहुयान्निन्द्राकृती कृत्वा हारियोजनं ग्रहं गृह्णीयादिति । ॥

10 शाकलैश्चर्याया इति ॥ सूत्रं शालीकेर्॥श्चो ह स्माह बौधायनो यावन्त्येनाꣳसि कृतान्यभिविजानीयात्तेषामवयजनमसीत्यभ्यादध्यादिति । ॥

15 आदित्यस्योपस्थान इति ॥ सूत्रं बौधायनस्या॥हवनीयमेवैतेन यजुषोपतिष्ठेरन्निति शालीकिः । ॥

8 कृष्णविषाणायाः प्रासन इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

12 अवभृथ इति ॥ सूत्रमाचार्ययोर्॥श्चो ह स्माहौपमन्यवोऽचैवैनꣳ[१] स्थण्डिले कुम्भमिश्रं प्ररोप्य स्थालीभिश्च ग्रावोवायव्येन चावभृथमवेयादिति । ॥

12 ग्रावोवायव्यस्य प्रस्नावन इति ॥ सूत्रं बौधायनस्य॥ प्रचास्योदाहरेयुरिति शालीकिः । ॥ प्रचास्यैवैता स्थालीरुदाहरेयुस्तास्वेतानि देविकाहवीꣳषि अपयेयुरिति बौधायनः॥ प्रस्नावयेयुरेवेति[२] शालीकिः । ॥ २४ ॥

कृष्णाजिनस्य प्रस्नावन इति ॥ सूत्रꣳ शालीकेर्॥श्चो ह स्माह बौधायनः कृष्णाजिनमुन्मुच्याद्भिरभ्युच्य पुत्राय वान्ते-

---

१ चैवैत्य Bu G D C, चैवैन H U (pr m), चैवैतत् U (sec m) चैतत् Be C'

२ एव only in G (sec m)

वासिने वा दद्यात्स्रुचोपधानं[1] वैनत्कुर्वीतापि वैनेन पुनर्दीक्षेतापि वैनेन पुनर्यजेतेति ' ॥

I 262 6 उदयनीयस्य बर्हिषः सꣳस्कार इति ॥ असिदादानप्रभृतीन्मन्त्रान्साधयेदिति बौधायनः " प्रस्तरप्रभृतीनिति शालीकिः " संभरणप्रभृतीनित्यौपमन्यवः ' ॥

1b उदयनीयस्य निर्वपण इति ॥ स्रुचि वावधाय[2] चामकाषꣳ स्थाल्यां[3] वा सचामकाषायां[4] निर्वपेदिति[4] ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ' ॥

I 262 9 उदयनीयस्य श्रपण इति ॥ पयसि श्रपयेदिति बौधायनो " ऽप्स्विति शालीकिः ' ॥

चरोरनुपरिहरण इति ॥ अनुपरिहरेदिति बौधायनो " नानुपरिहरेदिति शालीकिः ' ॥

उदयनीयस्यासादन इति ॥ षड्ढोत्रासादयेदिति बौधायनस्तूष्णीमिति शालीकिः ' ॥

उदयनीयस्य चर्याया इति ॥ सूत्रं बौधायनस्याहवनीय एवोदयनीयेन चरेदिति शालीकिः ' ॥

263. 2, 5 अनूबन्ध्यस्य[5] करण इति ॥ सूत्रं बौधायनस्य " मैत्रावरु-

---

१ स्रुचोपधानं all the MSS., स्रुवोप॰ Keś, स्रुचां निधानार्थं वृति. the vivarana

२ वांतर्धाय H D G U C C′

३ स्थाल्या G (sec m) Be C′

४ ॰काषयेति G (sec m), ॰काषयेदिति C′

५ अनू॰ G (sec m) C′ and the vivarana, अनु॰ the other MSS

ण्यामिचया[१] यजेतेति शालीकिर्न्नो ह स्माहौपमन्यवो ऽजं[२] पशुमप्यत्रालभेतैकादशप्रयाजं त्वेव तन्त्रꣳ संतिष्ठापयिषेदिति ।॥

वपानां परिहोम इति ॥ तांतां परिजुहुयादिति बौधायन ॥ आदितश्चान्ततश्चेति शालीकिः ।॥

हृदयशूलानामुद्वासन इति ॥ एकैकश उद्वासयेदिति बौधायनः ॥ सर्वान्सहेति[३] शालीकिः ।॥ २५ ॥

उत्सर्ग[४] इति ॥ सर्वान्गोपशूनुत्सृजेदिति बौधायनो ॥ ऽन्यत्रर्षभाच्च वशायै चेति शालीकिः ।॥

} 5 आमिक्षायै मन्त्रामन्त्र इति ॥ मन्त्रवती स्यादिति बौधायनस्तूष्णीकेति शालीकिः ।॥

} 6 मैत्रावरुणे परिधिष्विति ॥ सूत्रꣳ शालीकेर्न्नो ह स्माह बौधायनः पूर्वे स्थूणे सदसो वा हविर्धानयोर्वा भित्त्वा वैदलकान्परिधीन्मैत्रावरुणे[५] कुर्यादिति ।॥

---

१ वा ins G

२ ज Bu

३ सर्वाणि instead of सर्वान् some of the MSS , some omit सह ।

४ Thus G (sec m ) and the vivarana of our passage, उत्सर्ग a copy of the vivarana of the text proper, उत्सृग Bu, उत्सकरण Be C' U (sec m ), उत्सयण C D H U (pr. m ) G (pr m ) and a copy of the vivarana of the text proper.

५ वै(बै)दलकान् all (and thus also the Karmānta, XXV 26), exc G (sec m ), which has वैदलान् ।

I 263 8 उद्वसान इति ॥ सूत्रं बौधायनस्य ॥ पूर्णाहुत्यैवोद्वस्येदिति शालीकिः । ॥

I 263 12 दक्षिणायै दान इति ॥ सूत्रं बौधायनस्य ॥ नाचाकामनियत[१] देयमिति शालीकिः । ॥

I 263 13 देविकाहविषां करण इति ॥ सूत्रमौपमन्यवीपुत्रस्याचो ह स्माह बौधायनस्त्रीण्यनूबन्ध्यस्य पशुपुरोडाशमनुवर्तरꣳस्त्रीण्युद्वसानीयामिति ॥ सर्वाण्येवानूबन्ध्यस्य पशुपुरोडाशमनुवर्तरन्निति शालीकिराग्न्येनैव देविका यजेतेत्याश्मौगविः । ॥

I 264 5 अग्निभिः प्रत्यवसान इति ॥ अजस्रैः प्रत्यवस्येदिति बौधायनो ॥ ऽरण्योः समारोह्येति शालीकिः । ॥

I 264 7 अग्निहोत्रयोः प्रतिहोमः इति ॥ प्रतिजुहुयादिति बौधायनो ॥ न प्रतिजुहुयादिति शालीकिर्न प्रतिजुहुयादिति शालीकिः[२] । ॥ २६ ॥ दशमः ॥

॥ इत्येकविꣳशः[३] प्रश्नः ॥

2

१ Uncertain reading, नाचाकामयतो G (see m), नाचाकामन्वित Be C′ (but न्व corrected into व), नाचकामनियत U, नाचकामनिच्यत H, नाचकामनिधन D, नाचकामनिध्यन C′, नाचकामनियति Bu The vivarana, although my copy of it is rather bad, seems at least to point to ॰चकाम॰ as it runs इतरोकामस्यानिवृत्तो नियमः।

२ The repetition of the finishing words not found in the MSS

३ On the praśna- number cp Preface to Vol II, p II.

*अथातोऽग्निकल्पं व्याख्यास्यामः ॥

खरस्य करण इति ॥ उत्तरपूर्वे ऽवान्तरदेशे कुर्यादिति बौधायन॥ उत्तर एवेति शालीकिः। ॥

सावित्राणाᳲ होम इति ॥ सूत्रं बौधायनस्य॥ सम्ह्याप्यत्र चतुर्गृहीत जुहुयादिति शालीकिः। ॥

गर्दभरशनाया आदान इति ॥ मन्त्रेणाददीतेति बौधायनस्तू॥ष्णीमिति शालीकिः। ॥

वल्मीकवपायै निधाने वैश्यस्योपवेशन इति ॥ सूत्रᳲ शालीकेर॥त्रो ह स्माह बौधायनो वल्मीकवपां निदध्यात्र वैश्यमुपवेशयेद्यत्र खनिः[1] स्यात्तद्गच्छेद्यस्तत्र पृच्छेत्तं प्रतिब्रूयादिति। ॥

खनन इति ॥ अर्धर्चशः खनेदिति बौधायन॥ ऋचर्चेति शालीकिः। ॥

पुष्करपर्णेनोत्तरदण्डेन सᳲस्तृणातीति ॥ सूत्रं बौधायनस्य॥ यथोत्पन्नेनैव सᳲस्तृणीयादिति शालीकिः। ॥

पिण्डानाᳲ हरण इति ॥ सूत्रᳲ शालीकेर॥त्रो ह स्माह बौधायनः सर्वाभिःसर्वाभिश्चतुर्हरेदिति॥ गायत्रीभिर्हरेत्त्रिष्टुब्भिः सादयेदित्यौपमन्यवः। ॥

अश्वस्यात्यायमन इति ॥ सूत्रᳲ शालीकेर॥त्रो ह स्माह बौधायनस्तूष्णीमश्वमत्यायच्छेत्सर्वं एवैष गर्दभमन्त्रः स्यादिति। ॥

---

१ खनि or खनी the MSS खनि: भाविता स्यात् the Mahāgnisarvasva

II 4 12 द्यावापृथिव्योः समीक्षण इति ॥ उभे षट्कृत्वः समीक्षेतेति
I बौधायनस्त्रिरेवेति शालीकिः ॥ प्राच्यां दिशि संधिमीक्ष-
माण एतं मन्त्रं जपेदित्यौपमन्यवः । ॥

I II 4 16 अपो ऽशने अभ्यवहरन्त्यपि वाद्भिरभ्युक्ष्य भुञ्जत इति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥ १ ॥

I. II 5. 11 उखानां करण इति ॥ स ह स्माह बौधायनो ऽषाढाम-
प्येतस्यै याजुष्यै पादमात्रीं[1] कुर्याद्यावन्मात्रीं चादायेष्टका-
मृत्तिकायामपिसृजेदेवमस्य[2] सर्वो ऽग्निर्याजुषो भवतीत्य-
कामेवोखां मन्त्रेण कुर्यात्तूष्णीमितरे इति शालीकिः । ॥

सर्वासु भिन्नासु प्रत्यय इति ॥ स ह स्माह बौधायनः
समावित्तं मन्त्रकर्माभ्यावर्तयेदिति[3] ॥ यदन्यत्सावित्रेभ्य इति
शालीकिः । ॥

II 6 4 अथादत्त एकविंशतिं वृष्णो अश्वस्य शकृत्पिण्डानभि-
मग्निं पचनमिति ॥ सूत्रं बौधायनस्य ॥ यस्यैव कस्य चाश्व-
स्याददीतेति शालीकिः । ॥

II. 6 5 उखानां धूपन इति ॥ सूत्रं बौधायनस्यापरिमितैर्मन्त्रैर्धू-
पयेदिति शालीकिः । ॥

---

१ पाद॰ B U and G (sec m ) Bu, पद॰ Be C′ U and G (pr m )

२ ॰ष्टकायाम्नृत्ति॰ B G (sec m ), the vivarana सर्वेष्टकार्थायां ( या the Ms ) मृदि, the Ms सर्वेष्टकार्थायां ( या the Ms.) मृत्तिकायाम् ।

३ Thus G, U (sec m ) and the Ms., मंत्राकर्मा॰ B, मंत्रकर्मण्यावर्त॰ Bu, कर्माभ्यावर्त॰ Be C′.

*उखानां प्रवृञ्जन इति ॥ सूत्रं बौधायनस्य" कामेवोखां मन्त्रेण प्रवृञ्ज्यात्तूष्णीमितरे इति शालीकिः ' ॥

ताः प्राचीर्वोदीचीर्वायातयतीति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ' ॥

पचन इति ॥ स ह स्माह बौधायन उखा ऋषभाण्डमण्ड-लेष्टका बार्हस्पत्यं महावीरं लोकंपृणा इत्येतद्गार्हपत्यात्पचे-द्येतरद्ग्रामाग्नेरिति " यत्किं चेष्टकोक्तं ग्रामाग्निना तत्पचेद्ध-विरुक्तं गार्हपत्यादिति शालीकिः ' ॥

पशुशीर्षाणां करण इति ॥ प्रत्यक्षाणि वा मार्त्तिकानि वा स्युरिति बौधायनः " प्रत्यक्षाण्येवेति शालीकि" र्हिरण्मया-नीत्यौपमन्यवो " वायव्यश्विरसि वैतान्मन्त्रान्निगदेदित्यौप-मन्यवीपुत्रः ' ॥

त्रिरपसलैः पर्णशाखया परिकर्षतीति ॥ सूत्रं बौधाय-नस्यानुपरिकीर्यैव माषान्यमगाथाभिः परिगायेदिति शालीकिः ' ॥

आघार इति ॥ उभाभ्यां मन्त्राभ्यामेतमाघारमाघार-येदिति बौधायनो " हिरण्यगर्भः समवर्तताग्र इत्येतयैवैतमा-घारमाघारयेदिति शालीकिः ' ॥ २ ॥ **प्रथमः** ॥

अनिष्टप्रथमसोमस्याध्वरदीक्षाहुतीनाꣳ होम इति ॥ अध्वरदीक्षाहुतीर्हुत्वाग्निका जुहुयादिति बौधायन " आग्निका एवेति शालीकिः ' ॥

वैराजीषु दीक्षास्विति ॥ स ह स्माह बौधायनो नाम-

वत्सरꣳ सोध्यन्वैराजीर्दीचाः कुर्वीत। कामꣳ सवत्सरꣳ सोध्यन्वैराजीर्दीचाः कुर्वीत। संवत्सरं वा भूत्वैकाह्निकं[1] कुर्वीतैकाह्निकस्त्वेवाग्निरिति[2] शालीकिः।॥

I

II. 13 7 काम्यस्यान्ववधान[3] इति ॥ जाते काम्यमन्ववदध्यादिति[4] बौधायनः॥ पुरस्तादेवेति शालीकिः।॥

I

II. 13. 18 औदुम्बरीणाꣳ समिधामभ्याधान इति ॥ सूत्रं शालीके-र्॥चो ह स्माह बौधायन एकामेव समिधं पञ्चर्चेनाभ्याद-ध्यात्तदेव राचोघ्नꣳ स्यादिति।॥

II. 15. 14 अन्नपतीयायै समिधो ऽभ्याधान इति ॥ सूत्रꣳ शालीके-र्॥चो ह स्माह बौधायनो ऽन्नपतीयां प्रतिसमेधनीयां वैष्ण-वीमित्येता अभ्यादध्यादिति।॥

II. 16. 2 वात्सप्रविष्णुक्रमयोः संनिपात इति ॥ अहरहः संनिपातये-दिति बौधायन॥ आदितश्चान्ततश्चेति शालीकिः।॥

उख्य उद्दाते प्रायश्चित्तकरण[5] इति ॥ स ह स्माह बौधा-

---

१ Thus G U C′ and the Ms , भूत्वैकाह्निकं B Bu , भूत्वैकाह Be

२ According to the vivarana of this dvaidham, given in Ms , the इति, which is missing in all the MSS , ought to be inserted before ऐकाह्निकस्त्वे॰ ।

३ Thus U (sec m ) C′, ॰स्यान्वाधान the other MSS.

४ Thus B Be C′ Bu G (sec. m.) U (sec. m.), ॰न्वादध्या॰ G (pr. m ) and the Ms

५ प्रायश्चित्तस्य करण G (sec m ) U

यनैः प्रवृज्य परिदायाकाङ्क्षतिभिरभिजुहुयादथेतरत्कर्मावृता कुर्यादित्यौचो ह स्माह शालीकिः प्रवृज्य परिदायाकाङ्क्षतिभिरभिजुहुयान्न चेतरत्कर्मावृता कुर्यादिति ॥

प्रयाण इति ॥ स ह स्माह बौधायन उभयेन प्रयायाद्ध्वरिकेण चाग्निकेन चेत्यौग्निकेनैवेति शालीकिः ॥

अथ यद्यपर्याणा[1] अप उपाधिगच्छतीति ॥ सूत्रं शालीकेरौचो ह स्माह बौधायनो यद्येवापर्याणा अप उपाधिगच्छेत्तद्भस्म प्रवेशयेन्न च विगर्भां तां कुर्याद्यावन्मात्रं चादाय प्रत्यवदध्यात्प्रसव्य भस्मना योनिमित्यथेतरत्स्थालीषु वा मतेषु वानुनिधापयेदिति ॥

देवयजनस्याध्यवसान इति ॥ स ह स्माह बौधायन उभयेनाध्यवस्येदाध्वरिकेण चाग्निकेन चेत्यौग्निकेनैवेति शालीकिः ॥ ४ ॥

संभाराणां निवपन इति ॥ सूत्रं शालीकेरौचो ह स्माह बौधायनो भस्म चैवोषांश्च मन्त्रेण निवपेत्तूष्णीमितरौ संभाराविति ॥

गार्हपत्यचिताविति ॥ सूत्रं शालीकेरौचो ह स्माह बौधायनोऽग्निग्रहणं स्वयंचितिं श्वेतकृष्णयोरभिमर्शनमधिद्रवणमवद्रवणमिति[2] सर्वमेवैतत्कर्मावृता कुर्यादिति ॥

१ Thus here and infra all

२ Thus Bc C′ and cp. XXIII. 15, ०धिद्रवणावद्रवण इति B ०धिद्रवणावद्रवणे इति U (sec m.) Ms, ०धिद्रवणमिति Bu G U (pr. m)

माहस्रं चिन्वीत प्रथमं चिन्वानः पञ्चचितीकं चेति ॥ स ह स्माह बौधायनः समाप्यैतांश्चतुर्थं चिन्वानो जानुदघ्नं चात ऊर्ध्वं प्रत्याददीत पञ्चचितीक चेत्य॥चो ह स्माह शालीकिः समाप्यैतांश्चतुर्थं चिन्वानो ग्रीवदघ्नं चैवात ऊर्ध्वं प्रत्याददीतैकचितीकं चेति । ॥

वात्सप्रविष्णुक्रमयोः संनिपात इति ॥ स ह स्माह बौधायनो यद्यह[1] वात्सप्रमुपवसथे संपद्येत वात्सप्रेणोपस्थाय संनिवपेताथ यदि विष्णुक्रमा उपवसथे संपद्येरन्विष्णुक्रमैः क्रमित्वा वात्सप्रेणोपस्थाय संनिवापेन प्रक्रामेदित्य॥चो ह स्माह शालीकिर्यद्यह[2] वात्सप्रमुपवसथे संपद्येत वात्सप्रेणोपस्थाय श्वो भूते संनिवपेताथ यदि विष्णुक्रमा उपवसथे संपद्येरन्विष्णुक्रमैः क्रमित्वा वात्सप्रेणोपस्थाय श्वो भूते संनिवापेनैव प्रक्रामेदिति । ॥

II. 20 3 तस्यामन्यत्रावेक्षमाणो दधिद्रप्सान्प्रास्यत्यमुं ते शुचि दधामीति वा तूष्णीं वेति ॥ पूर्वः कल्पो बौधातनस्योत्तरः शालीकेः । ॥

II 20. 5 अथैनां सिकताभिः पूरयित्वा दध्नोपरिष्टात्संप्रच्छाद्येति ॥ सूत्रं बौधायनस्य ॥ सिकताभिरेवैनां[2] पूरयित्वोत्तरे शालाखण्डे निदध्यादिति शालीकिः । ॥

---

१ Thus Bu U G (sec m ) Be C′, यदिह B G (pr m ), यदि Ms

२ °रेवैनां Bu Be C′, °रेवैनाः B G U Ms

ग्निक्यस्यादान इति ॥ मन्त्रेणाददीतेति बौधायनस्तूष्णी-मिति शालीकिः ॥

नैर्ऋतीनामुपस्थान[१] इति ॥ कुर्वीताच तयादेवतमुददोहसे[२] इति[२] बौधायनो न कुर्वीतेति शालीकिः ॥

उदपात्रस्योपनिनयन इति ॥ प्रदक्षिणमुपनिनयेदिति बौधायनो यथोपपादमिति शालीकिः ॥

गार्हपत्यस्योपस्थान इति । सूत्र बौधायनस्याहवनीय-मेवैतेन यजुषोपतिष्ठेरन्निति शालीकिः ॥ ४ ॥ द्वितीयः ॥

स्तम्बयजुषो हरण इति ॥ सूत्र बौधायनस्यापरवकाशा-दप्याग्नीध्रो हरेदिति शालीकिः ॥

आख्यातं चात्वालस्य परिलेखनम् ॥

आख्यातं लोकाग्नीनांꣳ हरणम् ॥

आख्यातꣳ स्फ्यविघनानामुपस्थानम् ॥

कार्ष्णाजिनीनामुपमोचन इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

वज्रिणीनामुपधान इति ॥ सूत्रꣳ शालीकेरथो ह स्माह बौधायनो ऽग्रेण यूपावटीयꣳ शङ्कुं तिष्ठन्नुदधिज्यं कृत्वा प्राञ्चं बाणं प्रविध्येत्तमनुद्रुत्यास्थानमुपदध्यादेवं दक्षिणत एवं पश्चादेवमुत्तरत इति ॥

१ °मुपधान most of the MSS

२ Thus B G, °दोहसे इति Bu, °दोहस इति Bc, °दोहसाविति I. (sec m ), Ms , C′ uncertain

II 23. 2 ऐन्द्रिया[1] उपधान इति ॥ सूत्रं बौधायनस्य ॥ पुच्छ ऐन्द्रीमुपदध्यादिति शालीकिः । ॥

II 23 8 उदपात्रस्योपनिनय इति ॥ प्रदक्षिणमुपनिनयेदिति बौधायनो ॥ यथोपपादमिति शालीकिः । ॥

1b दर्भस्तम्बस्योपधान इति ॥ वाङ्मा समुद्र उपदधामिति वा तूष्णीं वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥

II. 23 10 दूर्वेष्टकाया उपधान इति ॥ स ह स्माह बौधायनो दूर्वया वा सहोपदध्याद्दूर्वां[1] वैवेति[2] ॥ मन्त्रदूर्वैवैषा स्यादिति शालीकिः । ॥

II. 23. 13 औदुम्बरं युगलाङ्गलमिति ॥ सूत्रं बौधायनस्य ॥ दार्व्यं-वृक्षमेवैनत्कुर्यादिति[3] शालीकिः ॥ पुरुषा एवैतद्युगलाङ्गलं पुरस्तादाददते ऽध्वर्युः पश्चादिति बौधायनः ॥ प्रत्यक्षमेवैतत्संयुज्य कृषेदिति शालीकिः । ॥

II. 24 1 कर्षण इति ॥ संप्रत्याहारं[4] कृषेदिति बौधायन ॥ आवाजम[5] इति शालीकिः ॥ ५ ॥

---

१ Thus Be G (pr m.), ऐन्द्र्या Bu B G (sec m), ऐन्द्रियामु॰ Bu

२ Thus C′, दूर्वांवैवेति B Be G, चैवेति U (sec m), वेति U (pr m)

३ Thus C′ the Viv and Ms. ॰वृक्ष॰ the other MSS — ॰मेवैतत्कु॰ G Ms, ॰मेवैनेकु॰ Be C′

४ Thus Be C′, संप्रत्यहारं Bu G, संप्रत्यगाहारं U, प्रत्यहारं B संप्रत्याहृत्याहृत्य the Viv

५ Thus B G U and the Viv.; अवाजम Bu, आवाज Be C′ Meaning uncertain

14 धिष्णियानां निवपन इति ॥ स ह स्माह बौधायनो वेद्यन्त आग्नीध्रीयं निवपेद्वेद्यन्ते मार्जालीयं । धिष्णियान्युप्योदीचीनसꣳस्थतां[१] कुर्यादित्य॥चो[१] ह स्माह शालीकिरन्तर्वेद्याग्नीध्रीयं निवपेदन्तर्वेदि मार्जालीयं । धिष्णियान्युप्य[१]न[२]चोदीचीनसꣳस्थतां[२] कुर्यादिति । ॥

10 वेद्यै स्तरण इति ॥ सूत्रꣳ शालीकेर॥चो ह स्माह बौधायनस्तयो दक्षिणतस्तय उत्तरतो मध्ये सप्तमः पृष्ठ्याकालं[३] प्राञ्च स्तृणन्तो गच्छेयुरिति ॥ पुरस्तादेवैनां प्रत्यञ्च स्तृणन्तोऽभ्यवक्रामेयुरित्यौपमन्यवः । ॥

11 अग्नीषोमीयस्याज्यानां ग्रहणे सादन इति ॥ सूत्र बौधायनस्य ॥ पत्नीशाल एवाग्नीषोमीयस्याज्यानि गृहीत्वान्तानि खरे सादयेदिति शालिकिः । ॥

13 समन्वानयन इति ॥ सूत्रं बौधायनस्य ॥ नाद्रियेतेति शालीकिः । ॥

---

१ Thus here and l 5 G (sec m), ०संस्था Be C', ०संस्थिता Bu ०संस्थितान्कुर्या० U H D C G (pr m)—Instead of धिष्णियान् H U D here and l 4 धिष्ण्यं ।

२ Thus C D C' G (sec. m.) Bu, न्युप्यानयोचीनसं० Be, न्युप्योदीचीनसं० H

३ Between पृष्ठ्या and कालं Bu G and U (sec m) ins ०स्तरण०, Be C D C' Keś omit the word, in H this dvaidham is missing —०कालं U G D Keś and cp XXI 14 94. 16, ०काले Bu C', कालं Be.

194 4 अर्धस्तनव्रतप्रदान इति ॥ समन्वानीय[1] वासमन्वानीय[1] वा[1] पुराणगार्हपत्यमर्धस्तनव्रत प्रयच्छेदिति बौधायनो" नार्धस्तनव्रतं प्रयच्छेदिति शालीकिः' ॥

195 1 वैसर्जनानाꣳ होम[2] इति ॥ सूत्रं बौधायनस्य" चत्वारि चतुर्गृहीतानि जुहुयादिति शालीकिः' ॥

195 7 वसतीवरीणामनुसꣳहरण इति ॥ अनुसꣳहरेदिति बौधायनो" नानुसꣳहरेदिति शालीकिः' ॥

वपानां परिहोम इति ॥ तांतां परिजुहुयादिति बौधायन" आदितश्चान्ततश्चेति शालीकिः' ॥

हृदयशूलानामुद्वासन इति ॥ एकैकश उद्वासयेदिति बौधायनः" सर्वान्सहेति शालीकिः' ॥

198. 3 वसतीवरीणां परिहरण इति ॥ सूत्रꣳ शालीकेर्"न्नो ह स्माह बौधायन एवमेवैनाः परिहरन्नग्रेण यूपꣳ सादयित्वा जघनेन गार्हपत्यमुपसाद्याग्नीध्रे सन्ना अभिमृश्यैवाञ्जे जाग्रतेति' ॥ १५ ॥ षष्ठः ॥

00 5 सवनीयस्याज्यानां ग्रहणे सादन इति ॥ सूत्रं बौधायनस्याग्नीध्र[3] एव सवनीयस्याज्यानि गृह्णीयात्तानि खरे सादयेदिति शालीकिः' ॥

---

१ In some of the MSS समन्वानीयवा is found once only, but cp the vivarana समन्वानयनात्प्रागूर्ध्वं वा।

२ परिहोम H Bu D C U G (pr m ), without परि Be G (sec m ) and the vivarana, C′ वेदसंमार्जनानां होम।

३ ०ग्नीध्रीय U, ०ग्नीध्रीये D C (omitting एव )

औदुम्बराणां महापरिधीनां परिधान इति ॥ सूत्रमाचार्ययोर्नो ह स्माहौपमन्यवः शुक्लन्ता एवैते स्युरिति ॥

राज्ञ उपावहरण इति ॥ सूत्रमाचार्ययोर्नो ह स्माहौपमन्यवः प्रातःसवन एव सर्वेभ्यः सवनेभ्यो राजानमुपावहरेदिति ॥

पञ्चहोतुर्होम इति ॥ सूत्र बौधायनस्य चतुर्होतारꣳ हुत्वा पञ्चहोतारं जुहुयादिति शालीकिः ॥

प्रातरनुवाकस्योपाकरण इति ॥ सूत्रमाचार्ययोर्नो ह [1]स्माहार्तभागीपुत्रस्तूष्णीकेनैककपालेन[2] प्रातरनुवाकमुपाकुर्यादिति ॥

सवनीयानां निर्वपण इति ॥ सूत्रमाचार्ययोर्नो ह स्माहौपमन्यवः प्रातःसवन एव सर्वेभ्यः सवनेभ्यः सवनीयान्निर्वपेदिति ॥

तेषां व्रीहिष्वेव हविष्कृतमुद्वादयत्युपोद्यच्छन्ते यवानिति ॥ सूत्रꣳ शालीकेर्नो ह स्माह बौधायन आवपनप्रभृति यवेषु मन्त्रकर्माभ्यावर्तेत तत्र तु हविष्कृत्[3] स्यादिति ॥

आप्यनिनयन इति ॥ जघनेन गार्हपत्यमाप्येभ्यो निनये-

---

१ ०र्तभागिपुत्र० G (sec m )

२ Thus Bu G (sec m ) the vivarana, ०तूष्णीमेकेनै० C H U D G (pr. m ), ०तूष्णीमेककपा० Be C′

३ हविष्कृत् G U, हविषूत् D H C, हविष्कृत Bu, हविष्कृत Be C′, cp XXI. 4 75 7, XXII 11

दिति बौधायनो ‖ ऽग्रेणातिहायेति शालीकिर्‖ग्रेण वा
1 जघनेन वेत्यौपमन्यवः । ॥

I 202 1 पात्राणाꣳ सादन इति ॥ सूत्रꣳ शालीकेर्‖न्नो ह स्माह बौधायनः खरे पात्राणि सादयेत्तेषां यथार्थमाददीतेति । ॥

I 203 9 अथैकधनान्गृह्णातीन्द्राय वो जुष्टान्गृह्णामीति वा तूष्णीं वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥ १६ ॥

I 203 14 अप्तोः प्रस्कन्दन इति ॥ होतृचमसादप्तुं प्रस्कन्दयेदिति बौधायनो ‖ वासतीवरात्कलशादिति[१] शालीकिः । ॥

I 203 21 क्रतुकरण इति ॥ सूत्रं बौधायनस्य ‖ यथाक्लृप्तेवास्य क्रतुकरणानि कुर्यादिति शालीकिः । ॥

I 204 8. दधिग्रहस्य ग्रहण इति ॥ सूत्रꣳ शालीकेर्‖न्नो ह स्माह बौधायन औदुम्बरेणैनं पात्रेण गृह्णीयाद्धुत्वा चैतत्पात्रमन्नैवानुप्रहरेदिति । ॥

I 205. 2. दक्षिणायै दान इति ॥ सूत्रं द्वैधमेवैतद्भवति ॥

I 205 7 तासु निग्राभ्यासु यजमानं वाचयतीति ॥ सूत्रꣳ शालीकेर्‖न्नोह स्माह बौधायन ऊरौ वोरसि वोपनिगृह्य तासु निग्राभ्यासु यजमानं वाचयतीति । ॥

I 205 17 राज्ञो निर्वपण इति ॥ सूत्रमाचार्ययोर्‖न्नो ह स्माहौपमन्यवः प्रातःसवन एव सर्वेभ्यः सवनेभ्यो राजानं निर्वपेदिति । ॥

---

१ Thus Bu G H, ०तीवरीकलशा० Be C′, ०तीवरीःक U

सो ऽꣳशौ स्कन्ने वाचयतीति ॥ सूत्रं बौधायनस्योपांꣳशावेवांꣳशौ स्कन्ने वाचयेदिति शालीकिः ॥

उपांꣳश्वन्तर्यामयोर्होम इति ॥ सूत्रं बौधायनस्याभावेवोदिते जुहुयादिति शालीकिरभावेवानुदिते जुहुयादित्यौपमन्यवः ॥

आग्रयणस्य ग्रहण इति ॥ सूत्रꣳ शालीकेर्नो ह स्माह बौधायनो द्वयोर्धारयोः प्रातःसवने गृह्णीयात्तिसृणां माध्यंदिने सवने चतसृणां तृतीयसवन इति ॥

द्रप्सानुमन्त्रणीयास्विति ॥ सूत्रं बौधायनस्य स्रुवाहुतीरेवैता[1] जुहुयादिति शालीकिः ॥ १७ ॥

पवमानग्रहाणां ग्रहण इति ॥ सूत्रं बौधायनस्य सजुष्टान्परिमृज्य सादयेदिति शालीकिः ॥

संतनीनाꣳ[2]होम इति ॥ सूत्रꣳ शालीकेर्नो ह स्माह बौधायनो वसतीवरीरप्येतैर्मन्त्रैरवनयेदिति ॥

पवमानानामुपाकरण इति ॥ सूत्रं बौधायनस्य सदस एव बर्हिषी आदायोपाकुर्यादिति शालीकिः ॥

ब्रह्मण उपवेशन इति ॥ यथा सदस्येवमुपविशेदिति बौधायनो यथा दर्शपूर्णमासयोरेवमिति शालीकिः ॥

१ Thus, and cp XXV. 18, H D C U G, °रेवैता Bu, °वैना Bc C'

२ Thus (with न) G (sec m) U, सततीना the other MSS, cp XXV 18

I 212 14. यजमानस्योपवेशन इति ॥ यथा सदस्येवमुपविशेदिति बौधायनो यथा दर्शपूर्णमासयोरेवमिति शालीकिः ॥

I 212 19 अथोद्गात्रे वा प्रस्तोत्रे वा बर्हिषी प्रयच्छतीति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

I 212 19 ऋक्सामयोरुपस्तरणमसि मिथुनस्य प्रजात्या इति वा तूष्णीं वेति । पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

I 213 5 पञ्चम्यां प्रस्तुतायां वाचयतीति ॥ सूत्रं बौधायनस्य यस्यामेव कस्यां चिद्वाचयेदिति शालीकिः ॥

I 213 16 सप्तहोतुर्होम इति ॥ सूत्रं बौधायनस्यानुसवनमेव सप्तहोतारं जुहुयादिति शालीकिः ॥

I 213 19 धिष्णियानां विहरण इति ॥ स ह स्माह बौधायन आग्नीध्रीयादङ्गारानादाय[1] तत आग्नीध्रीये प्रस्कन्दयेद्यथानुपूर्वमितरेषु धिष्णियान्विहृत्योदीचीनसंस्थतां[2] कुर्यादित्यन्नो ह स्माह शालीकिराग्नीध्रीयादङ्गारानादाय तत आग्नीध्रीये प्रस्कन्दयेद्यथानुपूर्वमितरेषु धिष्णियान्विहृत्य न चोदीचीनसंस्थतां[3] कुर्यादिति ॥

---

१ ०ग्नीध्र० and ०ग्नीध्रीय० the MSS promiscue, the vivarana and Keś always ०ग्नीध्रीय०।

२ Thus G D C U (pr m) संस्थितान् U (sec m), ०सस्थता H, ०सस्थां Bu, Be C′ defective

३ Thus U (sec m) D C C′, ०संस्थातं G (sec m), ०सस्थानं Bu, सस्थातां H Be U (pr m) G (pr m)

1 धिष्णियानां व्याघारण इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

खरग्रनस्योत्पादन इति ॥ यूपः खरग्रनमुत्पादयेदिति बौधायनः ॥ पशुरिति शालीकिस्तन्त्रमित्यौपमन्यवो ॥ देवतेत्यौपमन्यवीपुत्रः । ॥ १८ ॥ सप्तमः ॥

6 सर्पण इति ॥ सूत्रं बौधायनस्यापरदारिक[१] एव यजमानः स्यादिति शालीकिः ॥

तार्तीयसवनिकेषूक्थ्यविग्रहेष्विति ॥ स ह स्माह बौधायनः प्रसर्पेदेव तार्तीयसवनिकेभ्य उक्थ्यविग्रहेभ्यः षोडशिने[२] रात्रिपर्यायेभ्यो राथंतराय संधय इत्यंचो ह स्माह शालीकिस्तृतीयसवनातिवृद्धिरेवैषा[३] भवति । यदेव तृतीयसवने प्रसर्पेत्तत्प्रसृप्तमेव[४] तेषाᳪ[४] स्यादिति ॥ प्रातःसवन एव सर्वेभ्यः सवनेभ्यः संप्रसर्पेदित्यौपमन्यवः ॥

3 आमिक्षायै मन्त्रामन्त्र इति ॥ मन्त्रवती च स्यात्सर्वाणि च सवनान्यनुसमियादिति[५] बौधायनस्तूष्णीका च स्यात्स-

---

१ ०पराद्वारि० U D C H Be C′, cp XXI 9 86 7

२ ०शिने G Be, ०शिनि Bu H U C D C′

३ ०नातिवृद्धि० Be G (sec m ), ०नातवृद्धि० C D U, ०नंतवृद्धि० H G (pr. m ), नाभिवृद्धि० Bu C′ and the vivarana

४ ०मेवैतेषु G (sec m ), ०मेषा H

५ ०नुसमीया० MSS

र्वाणि च सवनान्यनुषमियादिति[१] शालीकिर्मन्त्रवती च स्यात्प्रातःसवने चैवैषा स्यादित्यौपमन्यवः ॥

I 217 11 सवनीयानामुद्वासन इति ॥ सूत्रं बौधायनस्य नानापात्रीष्वेव[२] सवनीयानुद्वासयेदिति शालीकिः ॥

I 217 16 प्रातः प्रातःसावस्येति ॥ सूत्रं बौधायनस्य प्रातःसावस्येत्येव ब्रूयादिति शालीकिः ॥

सवनीयानामनुसंहरण इति ॥ अनुसंहरेदिति बौधायनो नानुसंहरेदिति शालीकिः ॥

I 218 8 प्रतिनिर्ग्राह्याणां[३] ग्रहण इति ॥ सूत्रं बौधायनस्य द्विदेवत्येभ्य एव प्रतिनिर्ग्राह्यान्निगृह्णीयादिति[४] शालीकिः ॥

I 218 13 आघार इति ॥ सूत्रं बौधायनस्य ग्रहादेवैतमाघारमाघारयेदिति शालीकिर्द्रोणकलशात्परिप्लुना पात्रेणेत्यौपमन्यवो यजुरेवैतज्जपेन्नैतमाघारमाघारयेदित्याञ्जीगविः[५] ॥

---

१ ०नुषमीया० MSS

२ Thus Be C′ and the viv, ०पात्रेषु Bu G U D C Keś, ०पात्रेष्वेव H

३ ०निर्ग्रा Be C′ H U D C G (pr m), निग्रा० Bu G (sec m) and the vivarana

४ निर्ग्रात्याणिगृह्णी० G (sec m) but the ७ effaced, Be H C D U, ०निग्रात्यानिगृह्णी० Bu, ०नर्ग्राह्यानिगृह्णी० C′, ०निग्राह्यान्गृह्णी० Keś, read probably (with Keś) ०निर्ग्राह्यान्गृह्णीयादिति ।

५ Thus G (sec m), ०न्नैवमाघार० Be H U C D, ०नैनमाघारये० C′ ०न्नैतमाघारये० G (pr m) Keś, ०रेववदेवैतमाघारमा० Bu

9 सꣳस्रावस्यापिधान इति ॥ सूत्रं बौधायनस्य ॥ यावानेव[१] सꣳस्रावः स्यात्तमपिदध्यादिति शालीकिः । ॥

4 चमसानामायातन[२] इति ॥ अग्रेण स्रुचः[३] प्राच[३] आयातयेदिति बौधायनो ॥ जघनेन स्रुच उदीच आयातयेदिति शालीकिः । ॥ १९ ॥

4 ग्रहयोः संधान इति ॥ अरत्नी च ग्रहौ च संदध्यातामिति बौधायनो ॥ ग्रहावेवेति शालीकिः । ॥

2 शुक्रवतो मन्थिवत इति ॥ सूत्रं बौधायनस्य ॥ मन्थिवत इत्येव ब्रूयादिति शालीकिः । ॥

0 मन्थिसꣳस्रावस्य होम इति ॥ सूत्रꣳ शालीकेर्॥चो ह स्माह बौधायन आहवनीयादेवोदीचोऽङ्गारान्निर्वर्त्य तेषु मन्थिनः[४] सꣳस्राव[४] जुहुयादिति । ॥

होत्रकचमसानाꣳ[५] होम इति ॥ स ह स्माह बौधायनः शुक्रामन्थिभ्यामेनान्सह सकृज्जुहुयाद्विरभ्युन्नीतानित्य॥चो ह स्माह शालीकिर्नैनाञ्छुक्रामन्थिभ्याꣳ सह सकृज्जुहुयाद्विरेवाभ्युन्नीतानिति । ॥

---

१ यावानच U D C, यावामेच Be, याचानच H

२ °मायतन MSS and the vivarana

३ Thus G (sec m ) Bu, स्रुच उदीच H U C, स्रुच only, Be D C′

४ मंथिसंस्रा° G (sec m )

५ Thus G (sec m ) and C′ only, होत्रचमसानां the other MSS and the vivarana

I 223 17 द्विदेवत्यानां भक्षण इति ॥ सूत्रं बौधायनस्य ॥ प्राणेषूपनिग्राहं द्विदेवत्यान्भक्षयेदिति शालीकि॥र्दीर्घभक्षेणैवैनान्भक्षयेदित्यौपमन्यवः[१] । ॥

I 224 7 अथैतानि द्विदेवत्यपात्राण्यरिक्तानि करोतीति ॥ सूत्रं बौधायनस्य ॥ सोमेनैवैतान्यरिक्तानि स्युरिति शालीकिः । ॥

I 224 10 अथैनानि दक्षिणस्य हविर्धानस्योत्तरस्यां वर्तन्याꣳ सादयतीति ॥ सूत्रं बौधायनस्याधस्तादेवैनान्युपहव्यस्य[२] सादयेदिति[२] शालीकिः । ॥

वाचि वाचं दधामीति[३] वा तूष्णीं वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥

होत्रकचमसानां प्रतिभक्षण इति ॥ प्रतिभक्षयेदिति बौधायनो ॥ न प्रतिभक्षयेदिति शालीकिः । ॥

I 229 6 प्रत्यभिमर्शन इति ॥ सूत्रꣳ शालीके॥र्नो ह स्माह बौधायनो भक्षयन्नेव[४] भक्षाणां पारे प्रत्यभिमृशतीति । ॥

---

१ दीर्घभक्षेणैव॰ MSS , only C′ भक्षणैवैना॰ , cp XXV 20

२ Uncertain, ॰न्युपहव्यस्यासाद॰ G (sec m ), all the other MSS ॰न्युपहव्य आसाद॰ The vivarana अधस्तादेव दक्षिणस्योपहव्यस्य द्रोणकलशसमीपे, could उपहव्यस्य be the correct reading ?

३ Thus Bu C D G U C′, ददामीति H Be In the text proper no vikalpa of the kind here mentioned, is found , neither is the yajus to be traced in any text Perhaps this dvaidham is to be taken together with the foregoing one

४ Thus G (sec m ) and the vivarana, भक्षंनेव Bu , भक्षयेन्नेव H Be U D G (pr m ) C C′

ऐन्द्राग्नस्य ग्रहण इति॥ सूत्रमाचार्ययोर्॥त्रो ह स्माह दीर्घवात्स्यो मुख्येनैनं पात्रेण गृह्णीयादिति।॥

नाराशꣳसानामनुप्रकम्पन इति॥ अनुप्रकम्पयेरन्निति बौधायनो॥ नानुप्रकम्पयेरन्निति शालीकि॥र्नैनानुपोद्यच्छेरꣳस्तनेत्यौपमन्यवः।॥ २०॥ अष्टमः॥

माध्यंदिनीये ऽभिषव इति॥ नवकृत्वोनवकृत्वो ऽभिषुत्य निग्राभमुपेयुरिति बौधायनो॥ ऽपरिमितमिति शालीकिः।॥[1]

मरुत्वतीययोर्ग्रहण इति॥ सूत्रꣳ शालीके॥र्त्रो ह स्माह बौधायन उपरिष्टादेवाग्रयणाद्गृह्णीयादिति। ग्राह्यलोको ह्येष भवतीति।॥

अष्टम्यां प्रस्तुतायां वाचयतीति॥ सूत्रं बौधायनस्य॥ यस्यामेव कस्यां चिद्वाचयेदिति शालीकिः।॥

दधिघर्मस्य ग्रहण इति॥ सूत्रं बौधायनस्याग्नीध्र एनं गृह्णीयादिति शालीकिः॥ परिश्रित्योभयतः शान्तिं कृत्वाग्नीध्र एवेत्यौपमन्यवः।॥

दधिघर्मस्य चर्याया इति॥ उपांशु चरेदिति बौधायन॥ उच्चैरिति शालीकिः।॥

दधिघर्मस्य भक्षण इति॥ सूत्रꣳ शालीके॥र्त्रो ह स्माह

---

१ After this dvaidham G U D H C ins प्रातःसवन एवैषा स्यादित्यौपमन्यवः सवनीयानुद्वासन इति सूत्रं बौ॰ स्य नानापात्रेष्वेव सवनीयानुद्वासयेदिति शा॰ कि॰। cp XXI 19 104. 3

बौधायनोऽवभ्रभक्षणेनैवेतरे भक्षयेयुर्यजमान एव प्रत्यक्षं भक्षयेदरण्ये[1]ऽनुवाक्येन[1] मन्त्रेणेति ॥

240 20 दक्षिणानामत्याकरण[2] इति ॥ सूत्रꣳ शालीकेरत्रो ह स्माह बौधायन एकामेव दक्षिणां दक्षिणापथेनात्याकुर्याद्थेतरा[3] यथावकाशं गच्छेयुरिति ॥

संचर[4] इति ॥ नीतासु दक्षिणासु[5] यथार्थꣳ संचरेरन्निति बौधायनो नासꣳस्थिते सोमेऽध्वर्युः प्रत्यङ् सदोऽतीयादिति शालीकिः ॥

259 7 कृष्णविषाणायाः प्रासन इति ॥ सूत्रं बौधायनस्य नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्येदिति शालीकिः ॥

241 9 आत्रेयस्य संवदन[6] इति ॥ सूत्रꣳ शालीकेरत्रो ह स्माह बौधायनस्त्रिरेवाव्यतिषजन्पृच्छेत्[7] आत्रेयः क आत्रेय इति ॥ २१ ॥

---

१ Thus G U (pr m), viv, Keś, ॰णेनानुवा॰ Be U (sec m), ॰णेनवा॰ Bu H D C, ॰णेवानुबा॰ C′

२ Thus Be C′ Bu and the vivarana (one copy) ॰त्याक्रमण U H G D C and the vivarana (another copy)

३ ॰कुर्याद्॰ Be Bu C′, ॰क्रामयेद्॰ U H G D C

४ सचरण Bu

५ Between दक्षिणासु and यथार्थꣳ the MSS exc Be C′ and Keś, ins चात्वाले, clearly interpolated from the following dvaidham

६ Thus Bu C′ G (sec m), the vivarana, सवादन Be H C U D G (pr. m)

७ Thus Bu Be G C′, त्रिरेवव्यति॰ H U D C

गोयुगानामनुमन्त्रण इति ॥ तत्तद्देवानुमन्त्रयेदिति बौधायनः ॥ सर्वाणि सहेति शालीकिः ॥

सर्वौषधस्य वपन इति ॥ अर्धर्चशो वपेदिति बौधायन ॥ ऋचर्चेति शालीकिः ॥

इतरमितरञ्च विपरिहरतीतरमितरञ्चेति ॥ सूत्र बौधायनस्योददान एवैतां दिशमभिसंपादयेदिति शालीकिर्यजुषा यजुर्विपरिहरेदित्यौपमन्यवः ॥

स दर्भपुञ्जीलानि पयःप्रोक्षे ऽवधाय तैः प्रोक्षत्यग्नीन्वो ऽग्निभ्यो जुष्टान्प्रोक्षामीति वा तूष्णीं वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

कुम्भेष्टकानामुपधान इति ॥ सूत्रं बौधायनस्य ॥ पञ्चपुच्छेष्वेवैना[१] उपदध्यादिति[१] शालीकिः ॥

नानामन्त्रासु दिशो भजमानास्विति ॥ तयादेवतेनानुक्रम्य पारे सूददोहसः कुर्वीतेति बौधायनस्तांतामेवेष्टकां परिनिस्तिष्ठेदिति शालीकिः ॥

इष्टकागणानामुपधान इति ॥ तयादेवतेनानुक्रम्य पारे सूददोहसः कुर्वीतेति बौधायनस्तंतमेवेष्टकागणं परिनिस्तिष्ठेदिति शालीकिः ॥

अभिमर्शे ऽभिहोम इति ॥ सूत्रमाचार्ययोरन्नो ह स्माहौ-

---

१ Thus B G U (sec m), ०पुच्छेष्वेतासुप० Bu, ०पुच्छेष्वका उप० Be C.

पमन्यवः पुरस्तादभिमर्शाभिहोमाभ्यां तथादैवतसूददोहसः[१] कुर्वीतेति । ॥

II 28 15 सर्पशिरस[२] उपधान इति ॥ पूर्वः कल्पो बौधायनस्यो-त्तरः शालीकेः ॥

II 30 10 औदुम्बर चोलूखलमुसलमिति ॥ सूत्रं बौधायनस्य ॥ दार्व्यंत्वमेवैनत्कुर्यादिति[३] शालीकिः । ॥ ६ ॥

II 30 11 सर्वौषधस्यावहनन इति ॥ मन्त्रेणावहन्यादिति बौधायन-स्य ॥ तूष्णीमिति शालीकिः । ॥

II 30, 17 उखानामुपधान इति ॥ सूत्रं बौधायनस्य ॥ कामेवोखां मन्त्रेणोपदध्यात्तूष्णीमितरे इति शालीकिः । ॥

II 31 13 पशुशीर्षाणामुपधान इति ॥ मध्य उपदध्यादिति बौधा-यनो ॥ ऽन्तेषु तस्य व्युदूह्योपदध्यादिति शालीकिः । ॥

अथर्वशिरस उपधान इति ॥ पुरस्तात्सर्वतोमुखमग्रेण स्वयमातृणामत्र नवर्चमथर्वशिर उपदध्यादिति बौधायनो ॥ नाथर्वशिर इति शालीकिः । ॥

II, 33 12 सर्वतोमखस्योपधान इति ॥ सूत्रं बौधायनस्यानुदिशमेव[४] गायत्रीरुपदध्यादिति शालीकिः । ॥

१ Thus all the MSS , ०दोहसौ Ms.

२ ०शिर MSS exc. C

३ ०दार्व्यं० MSS exc. L C' and Ms , ०मेवैत MSS exc U

४ Thus Be C' C (sec. m.) and the Vn , the other MSS. om एव ।

अङ्गानामुपधान इति ॥ सूत्रं बौधायनस्य ॥ विज्ञातेष्वेवाङ्गेष्वङ्गान्युपदध्यादिति शालीकिः । ॥

ऋषभस्योपधान इति ॥ सूत्रꣳ शालीकेर ॥ त्वो ह स्माह बौधायन ईषत्प्रत्यवह्रतशिरसमेनमुपदध्याद्यथर्षभो[1] वाशितुमुपतिष्ठतीति[2] । ॥

अतीतानामिष्टकागणानामुपधान इति ॥ आधिमुपदध्यादिति[3] बौधायन ॥ श्चित्यन्त इति शालीकिः । ॥

व्रतप्रदान इति ॥ मध्यदिने व्रत प्रयच्छेदिति बौधायन ॥ श्चित्यन्त इति शालीकिः । ॥ ७ ॥ तृतीयः ॥

पुरीषचितेरुपधान इति ॥ सूत्र बौधायनस्य ॥ पूर्वेद्युरेव पुरीषचितिं परिनिस्तिष्ठेदिति शालीकिः । ॥

अश्वावभितस्तिष्ठेतां कृष्ण उत्तरः[4] श्वेतो दक्षिण[5] इति ॥ अत्रैवाभ्यां तिष्ठद्भ्यां घासमाहारयेदिति बौधायनः ॥ कालेकाल एवैनावुदानयेयुरिति शालीकिः । ॥

वालखिल्यानामुपधान इति ॥ उपरिष्टाद्वालखिल्या उपदध्यादिति बौधायनः ॥ पार्श्वत इति शालीकिः । ॥

---

१ Thus (प्रत्यवह्रुत०) U G (pr m ) C′ and Ms ०प्रत्यवह्रत० Bu , प्रत्यमवह्रुत० Be G (sec m ), प्रत्यगवह्रत० B

२ Thus G and Ms , वाशितमुप० or वाशितामुप० the other MSS

३ Thus B G U (sec m.), Ms and the Vıv , अधि० Bu अदि० Be C′ U (pr m )

४ उत्तरत G C and the Viv.

५ दक्षिणत B G

II 11 1 स्तृष्टीनामायातन[1] इति ॥ अग्रेण स्वयमातृणामुदीचीरेना आयातयेद्दोत्तरस्मात्पक्षसंधेः सर्वतो[2] वेति[2] ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II 11 ६ व्युष्टीनामुपधान इति ॥ सूत्रं शालीकेर्नो ह स्माह बौधायनः पुरस्तादेनाः प्रतीचीरुपदध्यात्पुरस्ताद्धि प्रतीची रात्रिर्व्युच्छतीति ॥

II 12 18 तासां पुरीषवतीं मध्य उपदधातीति ॥ स ह स्माह बौधायनः पुरीषेण वा सहोपदध्यात्पुरीषं[3] वैवेति मन्त्रपुरीषैवैषा स्यादिति शालीकिः ॥

II 12 20 वैराजानामुपधान इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II 13 ९ याज्ञसेनीनामुपधान इति ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

I 13 21 घृतेष्टकानामुपधान इति ॥ स ह स्माह बौधायनो घृतेन वा सहोपदध्याद्घृतेन वाभ्यज्यति मन्त्रघृता एवैताः स्युरिति शालीकिर्घृतपिण्डानेवात्रोपदध्यादित्यौपमन्यवः ॥

१ Thus C' (see m.), Ms, the Vrv (one copy), ॰मायतन the other MSS

२ Thus Ms. and the Vrv सर्वत इति वेति Bu B G U (pr. m.) सर्वत एवेति U (see m.) Be C'

३ Thus G, ॰षंचैवेति B Be Bu, षंचतिवेति U, ॰षंवैक्षावेति C' ॰षमेवैति the Ms

इष्टकानामावापस्थान इति ॥ अन्तरेण ज्योतिष्मतीश्च भूतेष्टकाश्चैतदिष्टकानामावापस्थानं भवतीति ॥ स ह स्माह बौधायनः संवेशनयजुः प्रबुद्धयजुः प्रयाणयजुरपर्याणयजुः सामिधेनीराप्रीरतीताꣳश्चेष्टकागणानत्रोपदध्यादित्यत्रो[1] ह स्माह शालीकिर्नानिष्टकं मन्त्रमिष्टकावदापादयेदतीतानेवेष्टकागणानत्रोपदध्यादिति[2] ॥

पौर्णमास्या उपधान इति ॥ सूत्र बौधायनस्योत्तर एवाꣳसे पौर्णमासीमुपदध्यादिति शालीकिः ॥

नक्षत्रेष्टकानामुपधान इति ॥ सूत्रꣳ शालीकेरत्रो ह स्माह बौधायनः प्रतितारकं चात्रेष्टका उपदध्यात्तत्रतत्र च रोचयेदिति ॥

सर्वतोमुखस्योपधान इति ॥ सूत्रꣳ शालीकेरत्रो ह स्माह बौधायनो व्यवेत[3] खल्विदं कृष्णस्याभिमर्शनेन[4] भवति सर्वतोमुखमुपधास्यञ्छ्रुतमश्वमभिमृशेदिति ॥

वर्धनेष्विति ॥ सूत्रꣳ शालीकेरत्रो ह स्माह बौधायनो

१ Before अत्रोपदध्या° Bu Be C' G (pr. m.) U (sec. m.) ms. एतदेव or एतद् here and l. 6, B G (sec. m.) and the Ms. om. these words.

२ °पातयेदितिता° some.

३ व्यवेतं Be U (sec. m.) Ms. (=व्यवहित), व्यपेत B G, व्यवेतं C' अपोवेतं Bu.

४ °मर्शनं the Ms.

यावन्ति वर्धनानि समाने ऽहनि संनिपतेयुः सर्वेषां पात्रे तथादेवतसूद्‍दोहमः कुर्वीतेति । ॥ ८ ॥ चतुर्थः ॥

17.9 अथ प्रोक्षणीषु हिरण्यशल्कान्प्रत्यस्यत्यूर्ध्वं[१] त्रिभ्यो ऽपरिमितानिति सहस्रमिति प्रोक्त ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥

18.9 शतरुद्रीयस्य होम इति ॥ सूत्रमाचार्ययोः ॥ पूर्वस्मिन्नेवानीके जुहुयादिति गौतमः । ॥

19.8 नमस्कारैरुपस्थान इति ॥ स ह स्माह बौधायनः सधनुष्क एवोपतिष्ठेतोत्तरस्या एव दिश आवृत्यैतेनैव यथेतमेत्य पश्चात्प्राङ् तिष्ठन्नूर्ध्वामुपतिष्ठेतेत्य॥थो[२] ह स्माह शालीकिर्दत्त्वैव धनुरुपतिष्ठेतैतस्यै चैव दिश आवृत्यैतेनैव यथेतमेत्य पश्चात्प्राङ् तिष्ठन्नूर्ध्वामुपतिष्ठेतेति[२] । ॥

20.1 परिषिच्यमाने यजमान वाचयतीति ॥ सूत्रं शालीकेर॥थो ह स्माह बौधायनः परिषिच्यपरिषिच्यैवाश्मनि कुम्भं निदध्यादश्मंस्ते क्षुदमु ते शुगृच्छत्वित्यभिनिर्दिश्य द्विष्यादिति । ॥

20.3 विकर्षण इति ॥ अर्धशो विकर्षेदिति बौधायन ॥ सकृदेवेति शालीकिः । ॥

१ वापयति instead of प्रत्यस्यति Be C.

२ Thus (कर्मास्) Be C and the Viv., कर्मस् all the other MSS. and the Ms.

II 52. 3　स्वयमातृण्णायै व्याघारण इति ॥ सूत्र बौधायनस्य'' अग्निं चतुरश्रामेनां व्याघारयेदिति शालीकिः ' ॥

II 53. 4　वैश्वानरमारुतानां मन्त्रामन्त्र इति ॥ मन्त्रवन्तः स्युरिति बौधायनस्तू''ष्णीका इति शालीकि'' वैश्वानर एव मन्त्रवान्स्या-त्तूष्णीका मारुता इत्यौपमन्यवः ' ॥

II 53. 6　आनीकवतस्य होम इति ॥ सूत्रं बौधायनस्या''हवनीय एवानीकवतं जुहुयादिति शालीकिः ' ॥

II 54. 4　अथैनꣳ संचितमाज्यप्रोक्षेण प्रोक्षतीति ॥ सूत्रꣳ शालीके-र''न्वो ह स्माह बौधायनो मन्त्रानुदिशं चैनं प्रोक्षन्मन्त्रा-नुश्लोक चेति ' ॥

II 54. 15　इध्मस्य निधान इति ॥ स ह स्माह बौधायन उभये-नेध्मं निदध्यादाध्वरिकेण चाग्निकेन चेत्या''ग्निकेनैवेति शालीकिः ' ॥ ९ ॥

II 55. 1　शाकलैः परिधान इति ॥ आहवनीयं परिदध्यादिति बौधायनः '' पुच्छमेवेति शालीकिः ' ॥

II 55. 5　स्रुवाहुत्योः करण इति ॥ कुर्यादिति बौधायनो '' न कुर्यादिति शालीकिः ' ॥

II 55. 7　पूर्णाहुत्यै[1] करण इति ॥ कुर्यादिति बौधायनो '' न कुर्यादिति शालीकिः ' ॥

II. 55. 8　अथ जुह्वन्मनसा दिशो ध्यायेदिति[2] ॥ दिग्भ्यो ऽहमग्नि-

---

१ Thus Ms only, पूर्णाहुत्योः the MSS., पूर्णाहुतिकरण the Vn

२ इति om. all exc. Ms

मभि[1]संभराणीति वा तूष्णीं वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II 56 8 प्रसेकस्यायातन[2] इति ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

II 56 10 तस्मिंस्त्वतुर उपस्तृणान आहेति ॥ सूत्र बौधायनस्य नोपस्तृणीतेति शालीकिः ॥

II 56 12 प्रसेकस्यानुप्रहरण इति ॥ अनुप्रहरेदिति बौधायनो नानुप्रहरेदिति शालीकिः ॥

I 56 13 ब्रह्मौदनस्य श्रपण इति ॥ अग्न्याधेयवत्कल्पयेदिति बौधायन एतस्मिन्नेवेति शालीकिः ॥

I 56 14 ब्रह्मौदनस्य प्राशन इति ॥ उत्तरे श्रोष्यन्तः प्राश्नीयुरिति बौधायनः पुच्छमेवाभित इति शालीकिः ॥

II. 57 1 वातनामानाꣳ होम इति ॥ सूत्र बौधायनस्य वातमध्यत्वाञ्जलिना जुहुयादिति शालीकिः कृष्णाजिनपुटेन जुहुयादित्यौपमन्यवः ॥

II 57 9 शाकलानामनुप्रहरण इति ॥ अनुप्रहरेदिति बौधायनो नानुप्रहरेदिति शालीकिः ॥ १० ॥ **पञ्चमः** ॥

57 12 अग्निधिष्ण्यानामुपधान इति ॥ सूत्र बौधायनस्य सर्वा एव याजुषीरुपदध्यादिति शालीकिः ॥

१ The two aksaras स्म effaced in G

२ ०यतन MSS exc. Be C⁷.

2 नानाबीजानां निर्वपण इति ॥ निर्वपणेनानुसमेत्य[1] व्यभिन्द्येदिति[1] बौधायनस्‖त्तदेव हविः परिमिश्लिष्येदिति शालीकिः । ॥

तेषां व्रीहिष्वेव हविष्कृतमुद्वादयत्युपोद्यच्छन्ते यवानिति ॥ सूत्रं शालीकेर‖न्यो ह स्माह बौधायन आवपनप्रभृति यवेषु मन्त्रकर्माभ्यावर्तेत तन्त्रं तु हविष्कृत्[2] स्यादिति । ॥

आप्यनिनयन इति ॥ जघनेन गार्हपत्यमाप्येभ्यो निनयेदिति बौधायनो ‖ ऽग्रेणातिहायेति शालीकिर‖ग्रेण वा जघनेन वेत्यौपमन्यवः । ॥

सचरुपशुपुरोडाशा[3] एवेतरेषां हविषामिडा अवद्येदभ्यर्धादिति[4] । सपशुपुरोडाशानां वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥

अत्याक्रमण इति ॥ सूत्रं बौधायनस्य ‖ सह स्विष्टकृतात्याक्रामेदिति[5] शालीकिः । ॥

अभिषेक इति ॥ सूत्रमाचार्ययोर‖न्यो ह स्माहौपमन्यवः

---

१ °समेत्याभिन्द्येदिति U (sec m )

२ Thus G (sec m ) Bu Be C′ Ms, °ष्कृत B G (pr m.) U; cp. XXI 4 75 7, XXI 16 99 16

३ °पशु° om B G U (pr m ) the Viv — °डाश B Bu G U (pr m ) the Viv., °डाशा Be C′ U (sec m.)

४ Thus (and cp II 71 5) B G B, °दत्यर्धादिति Be C′ °दभ्यर्धेदिति Bu

५ Thus U (pr m ) C′, the Viv , स्विष्टकृतमत्या° the other MSS.

पुरस्तात्स्विष्टकृतो यावदाम्नातेनाभिषिञ्चेन्नात्र कृष्णाजिनं न त्वक्रौ[१] न पार्थानि भवन्ति कुशानेव सꣳस्तीर्य तेष्वेनमभिषिञ्चेदिति ' ॥

II 58.18, 59 8 योगे विमोक इति ॥ अहरहर्युञ्ज्यादहरहर्विमुञ्चेदिति बौधायनो " ऽहरहर्युञ्ज्यादन्ते विमुञ्चेदिति शालीकिर"ादित एव युञ्ज्यादन्ते विमुञ्चेदित्यौपमन्यवः ' ॥

II 59 11. क्रतुकरण इति ॥ सूत्रं बौधायनस्य " यथाक्लृप्तमेवास्य क्रतुकरणानि कुर्यादिति शालीकिः ' ॥

II 59 13 ऐकादशिनानां[२] पशूनामुपाकरण इति ॥ सूत्रं बौधायनस्यै"कयूप एवैकादशिनान्पशूनुपाकुर्यादिति शालीकिः '

॥ ११ ॥

II. 59. 17 वपानां परिहोम इति ॥ तांतां परिजुहुयादिति बौधायन " आदितश्चान्ततश्चेति शालीकिः ' ॥

II 60. 3 अश्वस्यावघ्रापण इति ॥ सूत्रं बौधायनस्य " माध्यंदिन एव सवने ऽश्वमवघ्रापयेदिति शालीकिः ' ॥

पशूनामासादन इति ॥ पशुंपशुं पश्चाद्धोत्रासादयेदिति बौधायनो " मुख्यमेवेति शालीकिः ' ॥

हृदयशूलानामुदासन इति ॥ एकैकश उद्वासयेदिति बौधायनः " सर्वान्सहेति शालीकिः ' ॥

---

१ Thus Be C′ U (sec m), त्वक्रौ the other MSS.

२ C′ and the Vıv एका०।

आमिक्षायै मन्त्रामन्त्र इति ॥ मन्त्रवती च स्यादध्यवदानीया चेति बौधायनस्तूष्णीका च स्यादध्यवदानीया चेति शालीकिर्मन्त्रवती च स्यात्तन्त्रहरया चैनया निरूढया यजेतेत्यौपमन्यवः ॥

देविकाहविषां करण इति ॥ कुर्यादिति बौधायनो न कुर्यादिति शालीकिः ॥ १० ॥ षष्ठः ॥

अथातो वाजपेयं व्याख्यास्यामः ॥

चिन्वीत वाजपेये ऽग्निमिति बौधायनो न चिन्वीतेति शालीकिः ॥

औदुम्बरꣳ रथचक्रꣳ सप्तदशारमिति ॥ सूत्रं बौधायनस्य दार्व्यद्वचमेवैनत्कुर्यादिति[1] शालीकिः ॥

खादिरीं विहर्णी[2] वभ्रैर्व्यूतामुपकल्पयत[3] इति ॥ सूत्रं बौधायनस्य बस्ताजिनं चैवाचोपकल्पयीत शतमानं च हिरण्यमिति शालीकिः ॥

स ग्रीष्मस्य जघन्याहःसु पुरस्तादाषाढ्यै पौर्णमास्यै दीक्षत इति ॥ सूत्रं बौधायनस्य शरदि वाजपेयेन यजेतेति शालीकिः ॥

१ ०द्वच्य० G (sec m) — ०मेवैनत् G (pr m) U, ०मेवैतत् the other MSS

२ Thus G and the Viv, विह्नषि Bu, वितूषी B, वितूर्ष्णीं U, विकर्णा Be, विकर्णीं C′ (pr m), विहर्णी (sec. m)

३ Thus G, वध्यैर्व्यू० Be, वभ्रैर्व्यू० C′, वंधेस्तू० Bu, वाभ्रैर्व्यू० U, दध्यूर्व्यू० B, वभ्रैर्व्यू० the Viv. (one copy), वभ्रैक्त० (another)

II. 64 4, 65 10. सावित्राणाꣳ होम इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II 64 12 वाजपेयिकायै सुरायै संधान इति ॥ सूत्रमाचार्ययोर्॥न्वो ह स्माहौपमन्यवो यत्रैव सुरा स्यात्तत आहारयेदिति । ॥

II 65. 4 यो ऽरत्निमात्रेऽरत्निमात्रे वा विगृह्णाति धनुर्वेष्टीर्वा प्रवेष्टयतीति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II 65. 5. गौधूमं[1] चषालमिति ॥ सूत्रं बौधायनस्य ॥ गोधूमपिष्टानामपि कुर्यादिति शालीकिः । ॥

II. 66. 2. दुन्दुभीनामासञ्जन इति ॥ सूत्रं द्वैधमेवैतद्भवति ॥

II 66 14. क्रतुकरण इति ॥ सूत्रꣳ शालीकेर्॥न्वो ह स्माह बौधायनो ऽतिरात्रमप्यत्र क्रतुमुपेयात्समानपत्त्रे चैनꣳ संतिष्ठापयिषेदिति[2] ॥ १३ ॥

II. 66. 16 यच्चैन्द्रानतिग्राह्यान्गृह्णातीति ॥ सूत्रं बौधायनस्य ॥ सर्व एवैते[3] सोपयामा[4] ग्रहीतव्या[4] भवन्तीति शालीकिः । ॥

II 67 10. सुराग्रहाणां ग्रहण इति ॥ सूत्रं बौधायनस्य ॥ सजुष्टान्परिमृज्य[5] सादयेदिति शालीकिः । ॥

---

१ Thus G and the Viv (one copy), गोधम Bu, गोधूमं the other MSS.

२ Thus Be C′ U (sec m), संनिपतिष्येदिति B G, सन्निपधिष्येदिति Bu

३ Thus G C′, एवैने U, एवैतैः B Be, Bu defective

४ सोपयामग्रही॰ U.

५ Thus Be C′, सयजुष्टा॰ Bu U, सयजुष्का॰ B G

द्विश्रेणि[१] वा त्रिश्रेणि[१] वोदीच आयातयतीति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

षड्रशना आदाय यूपमभिप्रेयादिति बौधायनः ॥ पञ्च रशना आदाय यूपमभिप्रेयादिति शालीकिस्तिस्रो रशना आदाय यूपमभिप्रेयादित्यौपमन्यव ॥ एकामेव रशनामादाय यूपमभिप्रेयादित्यौपमन्यवीपुत्रो ॥ ऽग्नीषोमीयरशनायामेव नियुञ्ज्यादित्याश्मीगविः ॥

वाजपेयिकानां पशूनामुपाकरण इति ॥ ऐकादशिनाननुपाकृत्य[२] वाजपेयिकानुपाकुर्यादिति बौधायनो ॥ वाजपेयिकानेव नैकादशिनानिति शालीकिः ॥

प्राजापत्यानामुपाकरण इति ॥ एकैकश उपाकुर्यादिति बौधायनः ॥ सर्वान्सहेति शालीकिः ॥

वपानां परिहोम इति ॥ तांतां परिजुहुयादिति बौधायन ॥ आदितश्चान्ततश्चेति शालीकिः ॥

हृदयशूलानामुद्वासन इति ॥ एकैकश उद्वासयेदिति बौधायनः ॥ सर्वान्सहेति शालीकिः ॥

रथानामभियोजन इति ॥ सूत्रं शालीकेर्नो ह स्माह बौधायनो य एवैष समवक्षेपणो मन्त्रस्तं प्रथममभियोजनानां कुर्यादथ तूष्णीमश्वान्समवक्षिपेदिति ॥

काष्ठागमन इति ॥ स ह स्माह बौधायनः प्रदक्षिण-

---

१ द्विःश्रे० and त्रिःश्रे० G (sec m )

२ एका० the Viv.

मावृत्यैतां[1] काष्ठां गच्छेयुरथामुतो ऽपसलैरावर्तेरन्नित्यौ ह स्माह शालीकिरपसलैरावृत्यैतां[1] काष्ठां गच्छेयुरथामुतः प्रदक्षिणमावर्तेरन्निति । ॥ १४ ॥

II 79 14 अथ यजमानं तार्प्यं परिधापयतीति ॥ सूत्रं बौधायन-
स्यौभे एवैते यजमानं परिधापयेदिति शालीकिः । ॥
II 80.2 श्रित्या आयातन[2] इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः
शालीकेः ॥
II 80 5 तां दशभिः कल्पै[3] रोहतीति[3] ॥ सूत्रं बौधायनस्य ॥ तैरेव
मन्त्रैः प्रत्यवरोहेदिति शालीकिः । ॥
II 81.2 अथास्मै प्रत्यवरोहणत[4] आसन्दीं निदधातीति[5] ॥ सूत्रं
बौधायनस्य ॥ वस्ताजिनं चैवास्याच[6] प्रत्यवरोहेच्छतमानं[7] च
हिरण्यमिति शालीकिः । ॥

---

१ Thus both tımes C′ only, ०हृत्येत० both tımes G and B the second tıme, इंत्येत B the first tıme, all the MSS (exc C′) ०त्य०, not त्यै० ।

२ Thus B G, आयतन the Vıv, आतत Bu, आधान Be C′

३ Thus G U C′ (sec m ) and the Vıv , ०ल्पोरोह० Bu, ०ल्पैरारोह० B Be

४ Thus only the Vıv , प्रत्यवरोहत the MSS

५ Thus the Vıv , निमिनोतीति Be, मिनोतीति C′, प्रत्यवदधातीति B Bu G U

६ Thus B U G, वैवास्यच Bu, च only Be C, अस्य seems superfluous

७ Before शतमान B Bu U G ıns इति ।

5 अथैनमेतयासन्द्या सह आवहन्त्या वा व्रजतीति[१] ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

8 अतिग्राह्याणां भक्षण इति ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

0 प्राजापत्यानां भक्षण इति ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

2 गुदतृतीयेष्विति ॥ द्वे द्वे अत्र गुदतृतीये उपयष्टोपयजेदिति बौधायनो ॥ ऽपच्छेदमिति शालीकिः ॥ समस्तान्येवैतान्यनुप्रहृत्य सर्वैर्मन्त्रैरनुमन्त्रयेतेत्यौपमन्यवः । ॥ १५ ॥ सप्तमः ॥

1 अथातो राजसूयं व्याख्यास्यामः ॥

चिन्वीत राजसूयेऽग्निमिति बौधायनो ॥ न चिन्वीतेति शालीकिः । ॥

9 पुनरभ्युष्य पिष्टानि कृत्वाहारयेदिति बौधायनस्तथाभ्युप्तान्येवैतानि[२] स्युरिति शालीकिः । ॥

0 नैर्ऋतस्य मन्त्रामन्त्र इति ॥ मन्त्रवान्स्यादिति बौधायनस्तूष्णीक इति शालीकिः । ॥

2 एकोल्मुकस्य हरण इति ॥ अन्वाहार्यपचनाद्धरेदिति बौधायनो । ग्रामाग्नेरिति शालीकिः । ॥

1 नैर्ऋतस्य होम इति ॥ सूत्रं बौधायनस्य ॥ विस्रंसिकाकाण्डाभ्यामेनं परिगृह्य जुहुयादिति शालीकिः । ॥

---

१ व्रजतीति G B, ह्रजिनीति Bu, U Be C′ corrupt

२ Thus G, ॰भ्युप्यान्ये॰ U, ॰भ्युपन्ये॰ B, ॰ह्युप्तान्ये॰ Be C′.

II 86 3 दक्षिणानां दान इति ॥ अहरहर्दद्यादिति बौधायन ॥ आदितश्चान्ततश्चेति शालीकिः । ॥

II 86 3. उदपात्रस्योपनिनयन इति ॥ प्रदक्षिणमुपनिनयेदिति बौधायनो ॥ यथोपपादमिति शालीकिः । ॥

II 86 5 स्वाहा नमो य इदं चकारेति ॥ सूत्रं बौधायनस्यान्तमप्यत्र स्वाहाकारं परिणयेदिति शालीकिः । ॥

II 87. 1. संतनीनामनुप्रयोग इति ॥ स ह स्माह बौधायनो यदहरिष्ट्या वा पशुना वा यजेतापि तदहः संतनी[1] प्रयुञ्जीतेत्यथो ह स्माह शालीकिरहरहराश्रावणार्थे खल्वेते दृष्टे भवतो । यदहरिष्ट्या वा पशुना वा यजेत न तदहः संतनी प्रयुञ्जीतेति । ॥

1b चातुर्मास्यानामनुप्रयोग इति ॥ स ह स्माह बौधायनो यदहश्चातुर्मास्यानि प्रयुञ्जीतापि तदहः संतनी प्रयुञ्जीतेत्यथो ह स्माह शालीकिरहरहराश्रावणार्थे खल्वेते दृष्टे भवतो । यदहश्चातुर्मास्यानि प्रयुञ्जीत न तदहः संतनी प्रयुञ्जीतेति । ॥

II 88 17 आख्यातं पञ्चेध्मीयस्य करणम् । ॥ १६ ॥

II. 89. 3 अथोपवेषेणाङ्गारान्समूहतीति ॥ सूत्रꣳ शालीकेरथो ह स्माह बौधायनस्तूष्णीमङ्गारान्समूह्याथैनान्स्रुवाहुतिभिरभिजुहुयादग्नये[2] रक्षोघ्ने स्वाहेति पञ्चभिरत्र प्रष्टिवाहिनꣳ रथं दद्यादिति । ॥

---

१ Here and infra some of the MSS read संतनीः ( संतती )

२ स्रुवाहुती॰ Be U C′, स्रुवाहुत्या॰ Bu.

अपामार्गसक्तूनाꣳ होम इति ॥ सूत्रꣳ शालीकेरित्रो ह स्माह बौधायनः समस्तेनैवास्मै मन्त्रेणापामार्गसक्तूञ्जुहुयात्तूष्णीꣳ स्रुवमनुप्रहरेत्तूष्णीमुपोत्तिष्ठेदिति[1] ॥

देविकाहविषां करण इति ॥ सूत्रं बौधायनस्य सोमꣳसोममनुवर्तेरन्निति शालीकिर्न देविकाहविर्भिर्यजेदित्याश्चौगविः ॥

अग्निभिः प्रत्यवसान इति ॥ अजस्रैः प्रत्यवस्येदिति बौधायनो ऽरण्योः समारोह्येति शालीकिः ॥

पयसः समासेचन इति ॥ दृतौ वा विनाडे[2] वा समासिञ्चेदिति बौधायनो नवायां कुम्भ्यामिति शालीकिः ॥

स्वयंकृतेष्विति ॥ सूत्रꣳ शालीकेरित्रो ह स्माह बौधायनो गोन्यासप्रमृदितानां[3] कुशानां बर्हिः संनह्येत्स्वयंपतितानां काष्ठानामिध्म यदेव वेद्यै रूपꣳ सा वेदिर्दृतिं वा विनाडं[4] वा रथ आधाय परिवहेयुस्तत्र नवनीतमुत्सीदेत्तदाज्यꣳ स्यादिति ॥

मैत्रावार्हस्पत्यस्य निर्वपण इति ॥ समानपत्तुमुष्टौ स्याता-

---

१ ०मुपोत्तिष्ठेदिति G U C′, ०मुपतिष्ठेदिति B Bu Be, probably II 89 12 उपोत्तिष्ठति is the correct reading

२ विनाले G U C′, विनाळे the other MSS and the Viv

३ Thus Be C′ and comp the Viv गवा नियतगमनेन शातितानां कुशानां, योन्यायप्रमृ० G B Bu, येन्यायप्रमृ० U

४ विनालं or विनाळं MSS

मिति बौधायनो ॥ नानाचतुर्मुष्टी स्यातामिति शालीकिः ।

॥ १७ ॥ अष्टमः ॥

II 94 2. रोहिते चर्मणीति ॥ सूत्रं बौधायनस्या।प्यरोहितꣳ स्यादिति शालीकिः । ॥

सोमक्रयणेषूपेते[1] नित्याः शते स्युरिति बौधायन ॥ एत एव शततमाः स्युरिति शालीकिः । ॥

II. 94 8 वसतीवरीणां ग्रहण इति ॥ सूत्रं बौधायनस्य ॥ सारस्वतीरप्यत्र वसतीवरीर्गृह्णीयादिति शालीकिः । ॥

II 94 18. आग्नेयस्यैन्द्राग्न उपालम्भ्यो भवतीति ॥ सूत्र बौधायनस्यै॥न्द्राग्न एव सवनीयः स्यादिति शालीकिः । ॥

पात्राणां करण इति ॥ यथानिर्भेदं पात्राणि कारयेदिति बौधायनः ॥ प्राकृतान्येवैतानि स्युरिति शालीकिः । ॥

II. 98 1 सारस्वतीनामभिहोम इति ॥ सूत्रꣳ शालीकेर॥न्यो ह स्माह बौधायनो याभ्यामेतदृग्भ्यां वहन्तीरभिजुहुयात्ताभ्यां ग्रहेग्रहे जुहुयादथ तूष्णीꣳ सारस्वतीरभिजुहुयादिति । ॥

II. 98. 7 अभिषेचनीयानां ग्रहाणां ग्रहण इति ॥ सूत्रमाचार्ययो॥रन्यो ह स्माहौपमन्यवः पुरस्तात्सदसो ऽभिषेचनीयान्ग्रहान्गृह्णीयादिति । ॥

II 99 16, 102 9 धनुषः प्रदान इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

---

1 Thus B G U (pr m.), ०षूपस्थिते Be C' U (sec. m ), ०क्रयेषु Bu

मारुतस्यैकविंशतिकपालस्य कपालोपधान इति ॥ ऐष्टिकैरुपधाय* गणैरुपदध्यादिति बौधायनो ॥ गणैरेवेति शालीकिः । ॥

आमिक्षायै मन्त्रामन्त्र इति ॥ मन्त्रवती स्यादिति बौधायनस्तू॥ष्णीकेति शालीकिः । ॥ १८ ॥

क्लीबस्य स्थान इति ॥ अन्तर्वेदि तिष्ठेदिति बौधायनो ॥ बहिर्वेदीति शालीकिः । ॥

मणीनां करण इति ॥ औदुम्बर औदुम्बरेण लोहेन प्रच्छन्नः स्यादिति बौधायन ॥ औदुम्बर एवेति शालीकिः । ॥

तस्मिन्सह संग्रहीत्रा रथवाहने रथमादधातीति ॥ सूत्रं बौधायनस्याधाहणामेवैक[१] संग्रहीता स्यादिति शालीकिः । ॥

स्फ्यस्य प्रदान इति ॥ सूत्रꣳ शालीके॥र्नो ह स्माह बौधायनो यजमानस्यैवैकस्य मन्त्रेण सप्रयच्छेत्तू।ष्णीमितरे संप्रयच्छेरन्निति[२] । ॥

अक्षाणां करण इति ॥ सौवर्णाः स्युरिति बौधायनो ॥ राजता इति शालीकि॥ैनागदन्ता[३] इत्यौपमन्यवो ॥ वैभीतका इत्यौपमन्यवीपुत्रः । ॥

अथास्मै पञ्चाक्षानपच्छिद्य प्रयच्छतीति* ॥ सूत्रꣳ शाली-

---

१ Thus G, °स्याधातृणामे C′, °स्याधाक्षणामे° L, °स्य अथातणामे° B Be, in Bu this dvandva is missing

२ °यच्छेरन्निति G U C′

३ Thus G B Bu U, °दंता Be C′

केर्॥ यो ह स्माह बौधायनो येनास्यानुपपन्नꣳ स्यात्तं तत्रापि-सृजेद्विप्रो ऽभ्ययꣳ राजाभूदिति। ॥

II 111 8 अथ विषुवति दर्भस्तम्बे जुहोतीति ॥ सूत्रं बौधायनस्य॥ यत्रैव दर्भस्तम्बः स्यात्तद्गच्छेदिति[1] शालीकिः।

॥ १९ ॥ नवमः ॥

II 111 14 अग्नीनाꣳ हरण इति ॥ अजस्रान्हरेदिति बौधायनो। ऽरण्योः समारोह्येति शालीकिः। ॥

16 वेद्यै करण इति ॥ सूत्रं बौधायनस्य॥ पूर्वापूर्वा वेदिर्भवतीति शालीकिः। ॥

II 112 10 अथैनं तीर्थादानीय पवयित्वा पुण्डरिस्रजिनमुदानीयेति ॥ स ह स्माह बौधायन उभयानि पुण्डरिकाणि कारयेत्सौवर्णानि च नादेयानि चेति॥ नादेयान्येवेति शालीकिः। ॥

II 112 13. निदधत्यस्या एतद्धविरुच्छिष्टं व्रतभाजनमिति ॥ सूत्रं बौधायनस्य॥ नात्र हविरुच्छिष्टं व्रतभाजनं निदध्यादिति शालीकिः। ॥

II 112 17 सोमक्रयणेषूपैते[2] नित्याः स्युरिति बौधायन॥ एत एव स्युरिति शालीकिः। ॥

---

१ तत्र instead of तत् Be C′

२ Thus B G U (pr m), °षुपेते Bu, °षूपस्थिते Be C′ U (sec m)

औपसदाꣳ[1] हविषां मन्त्रामन्त्र इति ॥ मन्त्रवन्ति[2] स्युरिति बौधायनस्॥तूष्णीकानीति[3] शालीकिः । ॥

4 आग्नेयस्य प्राजापत्यस्थपर उपालम्भ्यो भवतीति ॥ सूत्रं बौधायनस्य॥ प्राजापत्य एव सवनीयः स्यादिति शालीकिः । ॥

1 भार्गवो होता भवतीति ॥ आदित एव भार्गवꣳ होतारं वृणीतेति बौधायनो॥ दशपेय एव भार्गवो होता स्यादिति शालीकिः । ॥

शतं ब्राह्मणाः पिबन्तीति[4] ॥ यजमान[5] एकशततमः स्यादिति बौधायनो॥ यजमान एव शततमः स्यादिति शालीकिः । ॥

दक्षिणानां दान इति ॥ एता एव ब्राह्मणाभिविहिता[6] दक्षिणा दद्यादिति बौधायन॥ एतन्मुखꣳ सहस्रमिति शालीकिः । ॥ २० ॥

1 तेषामुत्थानेष्विति ॥ गच्छेयुरावभृथादिति बौधायनो॥ ऽप्तोर्यामान्ता इति शालीकि॥र्ध्रुवान्ता इत्यौपमन्यवः । ॥

8 हविषोहविष इष्ट्वा बार्हस्पत्यमभिघारयतीति ॥ बार्ह-

---

१ Thus G B and the Viv , उपसदि U, ओपसदाना C′, औपसदौ Bu , Be defective

२ ०वंत MSS

३ Thus G and U (pr m ), तूष्णीका इति B G (sec m ), तूष्णीकेति C′, तूष्णीकानिति Bu

४ cp T Br I 8 2 2

५ Before यजमान G B ins यो, U ये ।

६ ०भिहिता Be C′

स्पत्यस्यापीड्या[1] बार्हस्पत्यमभिघारयेदिति बौधायन॥ इतरेषामेव हविषां न बार्हस्पत्यस्येति शालीकिः।॥

II 115 13 उच्चैरादित्याया आश्रावयत्युपांशु[2] मारुत्या इति॥ आदित्याश्रावणप्रभृत्युपांश्वथेतरदुच्चैरिति[3] बौधायन॥ आ मारुत्याश्रावणप्रभृत्युपांश्वथेतरदुच्चैरिति शालीकिः॥ सर्वैवोच्चैरादित्या सर्वोपांशु मारुतीत्यौपमन्यवः।॥

II 115 15 सात्यदूतेष्विति॥ सूत्रं बौधायनस्ये॥मं[4] ते[4] ऽसौ[4] प्राहैषीदित्येव ब्रूयादिति शालीकिः।॥

II 117 14 द्विरात्र इति॥ सूत्रं बौधायनस्य॥ यजनीये[5] ऽहन्पूर्वमहर्भवत्युत्तरस्मिन्नुत्तरमिति शालीकिः।॥

II 118 5 देविकाहविषां करण इति॥ कुर्यादिति बौधायनो॥ न कुर्यादिति शालीकिर्न कुर्यादिति शालीकिः[6]।

॥ २१ ॥ दशमः ॥

॥ इति द्वाविंशः प्रश्नः ॥

---

१ Thus G and the Viv, ०स्यापीला B, स्यपिड्या U, C′ Be corrupt, Bu defective

२ Thus G, all the other MSS more or less corrupt

३ Here and infra all the MSS इतर instead of इतरद् ।

४ Emended; ०स्यमावेषौ Be C′ U (sec m), ०स्यमचेसौ Bu, ०स्यमंचेस्ये G, ०स्यमंचस्ये B, cp XXIII 2 and T Br I 8 3 4 दूतान्प्रहिणोति ।

५ Thus all.

६ In the MSS no repetition of the final words

अथात इष्टिकल्पं व्याख्यास्यामः ॥

स ह स्माह बौधायनः पञ्चदशसामिधेनीकाः स्युर्वार्त्रघ्ना-वाज्यभागावुच्चैर्देवता इत्यन्यो ह स्माह शालीकिः सप्तदश-सामिधेनीकाः स्युर्वृधन्वन्तावाज्यभागावुपांशु देवता इति ॥

याजमानस्य करण इति ॥ संसिद्धमिष्टिपथे[1] याजमानं कुर्यादिति बौधायनः । कुर्याद्यथावकाशं याजमानमिति शालीकिः ॥

३ अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्यो दर्शपूर्ण-मासयाजी सन्नमावास्यां वा पौर्णमासीं वातिपादयेदिति ॥ स ह स्माह बौधायनः पाथिकृतं निरुप्य वैश्वानरं द्वादशकपा-लमनुनिर्वपेद्यथातिपन्नां प्रतियजेदित्यन्यो ह स्माह शालीकिः पाथिकृतं निरुप्य वैश्वानर द्वादशकपालꣳ समानतन्त्रमनुनिर्व-पेन्न चातिपन्नां प्रतियजेदित्यन्यतरेणैव सहातिपन्नां प्रति-यजेदित्यौपमन्यवो ऽन्यो ह स्माहाश्मौगविर्वि वा एतस्य यज्ञश्छिद्यते यस्य तन्त्रे प्रतते ऽन्यत्तन्त्र[2] प्रतायते । य एवैषो[3] ऽच्युत[3] आग्नेयो ऽष्टाकपालस्तमेव पौर्णमास्यां वामावास्यायां वा पाथिकृतं कुर्यान्न चातिपन्नां प्रतियजेदिति ॥

अग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेद्य आहि-

---

१ °सिद्धमिष्टिपथे G, °सिद्धमिष्टियथे B, °सिद्धिमिष्टिपथे U सिद्धिमिष्टयथे Bu, °सिद्धमिष्टयथे Be C′

२ न्यतंत्रं MSS

३ Thus C′, एवैषोच्युत U, एवैषोच्यत B G Be, एवैषाच्यूत Bu

तान्निः सन्नन्नत्यमिव चरेदिति ॥ आधानप्रभृत्येवैतदुक्तं भवतीति बौधायनो " ऽन्वाहितेषु चैवोपसमाहितेषु चाग्निष्विति शालीकिः ' ॥

1 II 121 9 अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेद्यꣳ रक्षाꣳसि सचेरन्निति ॥ हुत्वाग्निहोत्रमिष्टिꣳ सꣳस्थापयेदिति बौधायनः " सꣳस्थितायामिष्ट्यामग्निहोत्रं जुहुयादिति शालीकिः ' ॥

1 II 121 17 अग्नये रुद्रवते पुरोडाशमष्टाकपालं निर्वपेदभिचरन्निति ॥ स ह स्माह बौधायनो लोहितोष्णीषा लोहितवाससश्चर्त्विजः प्रचरेयुरिति " याज्यापुरोऽनुवाक्याभ्यामेवैतदुक्तं
1 भवतीति शालीकिः ' ॥

I II 121. 18 अग्नये सुरभिमते पुरोडाशमष्टाकपालं निर्वपेद्यस्य गावो वा पुरुषा वा प्रमीयेरन्यो वा बिभीयादिति ॥ स ह स्माह बौधायनः प्रोक्षणीषु च गन्धानावपेयुर्गन्धवन्तश्चर्त्विजः प्रचरेयुरिति " याज्यापुरोऽनुवाक्याभ्यामेवैतदुक्तं भवतीति शालीकिः ' ॥

II 122 7 अग्नये कामाय पुरोडाशमष्टाकपालं निर्वपेद्यं कामो नोपनमेदिति ॥ स ह स्माह बौधायनो या तत्राम्नाता स्यात्तां चेन्निर्वपतः कामो न समृध्येताथैव[१] कुर्यादित्येषैव सार्वकामिकी स्यादिति शालीकिः " कामेकाम एषा[२] स्यादित्यौपमन्यवः ' ॥

II 124 1 अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्नि-

---

१ °थैवं G U Be, थैनं B C′, भैचं Bu

२ एषा G, एवैषा U, all the other MSS एष ।

हुतो ऽहुते ऽग्निहोत्र उद्वायेदिति ॥ सूत्रꣳ शालीकेर॑त्रो ह
स्माह बौधायनो मन्थनमधिमन्थनमुपसमिन्धनमित्येतान्मन्त्रा-
न्निगदेदिति ।॥

वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जात इति ॥ स ह
स्माह बौधायन उत्थितायां निर्दशायां वैश्वानरं द्वादश-
कपालं निर्वपेत्सꣳस्रावस्य च कुमारं प्रलेहयेदिति ॥ जात-
मेव विदित्वेति शालीकिर्न च सꣳस्रावस्य कुमारं प्रलेहये-
दित्य॑नन्तरे पर्वणीत्यौपमन्यवः[1] ।॥ १ ॥

२ विपर्यस्तहविषीति ॥ मारुतः[2] प्रथमं मन्त्रकर्म[3] लभेतेति
बौधायनो ॥ ऽवदानत इति शालीकिः ॥ प्रदानत इत्यौप-
मन्यवश्चातुष्प्राश्यादित्यौपमन्यवीपुत्रः ।॥

३ वैश्वानरं द्वादशकपालं निर्वपेदायतनं गत्वेति ॥ यत्रैव
यतिष्यमाणः स्यात्तदायतनं । तद्गत्वा वैश्वानरं द्वादशकपालं
निर्वपेदिति बौधायनः ॥ स्वेष्वानेष्वेवाग्निष्विति शालीकिः ।॥

४ यथा रज्जोत्तमां गामाजेदिति ॥ सूत्रं बौधायनस्ये॑मां
ते ऽसौ पाहैषीदित्येव[4] ब्रूयादिति शालीकिः ।॥

---

१ The words after प्रलेहयेदिति only in C′ and U (sec m), Be has of them only औपमन्यवो, the other MSS omit the opinion of Aupamanyava

२ मारुतं Bu

३ तच Be C′ (pr m)

४ Thus C′ U (sec m), प्रहैषी॰ the other MSS, cp XXII 21 and XIII 10 126 5

II 127 10 बल्बजानपीध्मे संनह्येदिति ॥ सूत्रं बौधायनस्य ॥ बल्बजानामप्यत्र बर्हिः संनद्धं भवतीति शालीकिः ।॥

II 128 7 आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्निति ॥ सूत्रं बौधायनस्य ॥ प्रत्यभिचरन्तमेव विद्विलेति शालीकिः ।॥

ib सारस्वतमाज्यमिति ॥ मन्त्रनिरुप्तमेतद्भूतꣳ[1] स्यादिति बौधायनस्य॥ तूष्णीकमिति शालीकिः । कालेकाल एवैनद्ध्रुवाज्याद्गृह्णीयादित्यौपमन्यवः[2] ।॥

II. 128 17 अध्वरकल्पायामिति ॥ स ह स्माह बौधायन इडान्तं प्रथमं तन्त्रं कुर्यादेवं द्वितीयं तृतीयेन सहावशेष वर्तयेदित्यथो ह स्माह शालीकिरा प्रणीतात्प्रथमस्य[3] तन्त्रस्य परिशाययेदेव[4] द्वितीयमेव[5] तृतीयं[5] । तृतीयेन सहावशेषं वर्तयेदिति ॥ सपूर्णपात्रविष्णुक्रमा[6] इत्यौपमन्यवः[6] ।॥

II 129. 7. यो ब्रह्मवर्चसकामः स्यात्तस्मा एतꣳ सोमारौद्रं चरुं

१ तत्रनिरुप्त॰ B G, मंत्रेनिरुप्त॰ U, तत्रंनिरूपत॰ Bu, मत्रभिनरुप्त॰ Be, मंत्रनिरुप्त॰ C'

२ ध्रुवाज्यात्गृह्ण॰ G U (sec m), ध्रुवाज्यास्यात्गृह्ण॰ B U (pr m), ध्रुवाज्यंगृह्ण॰ Be C', ध्रवाग्ह॰ Bu

३ Thus Be C' U, प्रणीतात्प्र॰ B G (pr m), प्रणीताः प्र॰ G (sec. m), Bu defective

४ Thus G B, कुर्यादेवं U Be C', Bu defective

५ एवं तृतीयं om. B G

६ ॰क्रमादित्यौ॰ C' U (sec. m)

तिष्यापूर्णमासे निर्वपेदिति ॥ उपवसथीये ऽहन्निर्वपेदिति बौधायनो ॥ यजनीये ऽहन्निति शालीकिः । ॥

आज्यं प्रोक्षणमाज्येन मार्जयन्त इति ॥ उदकुम्भ आज्यस्रुवं प्रत्यस्येदिति बौधायनः । प्रोक्षण चैव मार्जनं चाज्येन[1] कुर्यादथेतरदद्भिः कुर्यादिति शालीकि॥र्यत्कि चाद्भिः कार्यꣳ स्यात्सर्वं तदाज्येन कुर्यादित्यौपमन्यवः । ॥

यदि बिभीयाद्दुश्चर्मा भविष्यामीति सोमापौष्णं चरुं निर्वपेदिति ॥ विज्ञातेषु रूपेषु निर्वपेदिति बौधायनः ॥ पुरस्तादेव शङ्कमान इति शालीकिः । ॥

अर्धेष्विति ॥ सꣳस्थितायामिष्टामर्धानभ्यादध्यादिति बौधायनो ॥ ऽत्रैव परिशयोरन्निति शालीकिः । ॥ २ ॥ **प्रथमः** ॥

विपर्यस्तहविषीति ॥ मारुतः प्रथमं मन्त्रकर्म लभेतेति बौधायनो ॥ ऽवदानत इति शालीकिः ॥ प्रदानत इत्यौपमन्यवस्तौतुष्याश्यादित्यौपमन्यवीपुत्रः । ॥

मारुतीभ्याꣳ होता यजतीति ॥ स ह स्माह बौधायन आदित एव होता मरुत आवाहयेदनुवाचनतो ऽध्वर्युरिति ॥ याज्यापुरोऽनुवाक्याभ्यामेवैतदुक्तं भवतीति शालीकिः । ॥

आदित्येभ्यो भुवद्वद्भ्यश्चरुं निर्वपेद्भूतिकाम इति ॥ सूत्रꣳ शालीके॥र्वो ह स्माह बौधायनः सर्वाः सपदाः सर्वाः ससाविचाः सर्वाः समयूखेभ्या इति ॥

पदपाꣳसूनाꣳ हरण इति ॥ सूत्रꣳ शालीके॥र्वो ह

---

१ चैवाज्येन B Be

स्माह बौधायनः समस्तेनैवास्य[१] मन्त्रेण पदपांसून्हृत्वोत्तर वर्ग्ये[२] आवपेदथ तूष्णीमुरस्यनुनिनयेदिति ॥

II 133 16 अतः सुवर्णानि कृष्णलानि भवन्तीति ॥ तत्र बौधायनस्योपयतान्येवैतानि[३] स्युरिति शालीकिः परिहारयेद्वैषामिति[४] ॥

II 134 3 चत्वारि चत्वारि कृष्णलान्यवद्यति चतुरवत्तस्याप्त्या इति ॥ स ह स्माह बौधायनो यान्यवत्तानि स्युर्जुहुयादेव तान्यथ यानि भक्षार्थानि स्युस्तद्यजमानगृहीतान्येव[५] तानि स्युरथेतराणि समावच्छो विभजेरन्नित्यथो ह स्माह शालीकिर्यान्यवत्तानि स्युर्जुहुयादेव तान्यथ यानि भक्षार्थानि स्युस्तद्यजमानगृहीतान्येव[५] तानि स्युरथेतराणि प्राशित्रहरणे श्रोप्य ब्रह्मणे परिहारयेदिति ॥

II 137 21 यः पापयक्ष्मगृहीतः स्यात्तस्मा एतमादित्यं चरुममावास्यायां निर्वपेदिति ॥ उपवसथीये ऽहन्निर्वपेदिति[६] बौधायनो यजनीये ऽहन्निति[६] शालीकिः ॥

---

१ ०स्य Be C′ U (sec m ), ०स्मै Bu U (pr m ), ०स्मिन् G B

२ Thus (and cp vol II, 104 2) G, ०वर्गे the other MSS

३ बौधायनस्यौपयता० G U, ०नस्य बोपय० B, ०धायनस्येत्यायशान्य० Be, ०धायन्येत्यायसन्येवैतानि C′, but cp. the Viv उपयतेन तानि भवन्तीति । अतसमीपे कनानि वाधिकानि वेति ।

४ Thus the Viv (ब्रह्मणे to be understood), प्रतिहार० the MSS.

५ Thus G , स्युस्तद्यव० the other MSS

६ Instead of ऽहन् (thus B G Bu) the other MSS. ऽहनि ।

सांग्रहण्यै परिधिष्विति ॥ ऐष्टिकैः परिधाय पौरोडाशिकैः परिदध्यादिति बौधायन ॥ ऐष्टिकैरेवेति शालीकिः । ॥

आहुतीनाꣳ होम इति ॥ सूत्रꣳ शालीकेर् ॥ त्रो ह स्माह बौधायन औदुम्बरैः पात्रैरेता आहुतीर्जुहुयाद्धुत्वा चैतानि पात्राण्यग्नावेवानुप्रहरेदिति । ॥

आज्यस्यावेक्षण इति ॥ सूत्र बौधायनस्य ॥ यन्नवमैत्तन्नवनीतमभवदित्येतैरेवाज्यमवेक्षितमुत्पुनुयादिति[१] शालीकिः । ॥ ३ ॥

यावतो ऽश्वान्प्रतिगृह्णीयात्तावतो वारुणाꣳश्चतुष्कपालान्निर्वपेदेकातिरिक्तानिति ॥ स ह स्माह बौधायनो वैश्वानरेणैक[२] प्रतिगृह्णीयादेवं[३] द्वौ[४] । गणं[४] तु प्रतिगृह्य कुर्वीत[५] बहुषु[६] वारुणानेकातिरिक्तानित्य् ॥ अत्रो ह स्माह शालीकिर्वैश्वानरेणैकं प्रतिगृह्णीयान्न तु द्वौ[७] । गणं[७] तु प्रतिगृह्य कुर्वीत न[८] तु द्वयोर्बहुषु वा वारुणानेकातिरिक्तानिति । ॥

---

१ पुनुयाद् again all

२ About the correct reading and the meaning of this dvaidha I am uncertain, ०णैक B U Bu, ०णैवैक Be G, ०णैक० C′

३ एव C′ U, एवं the other MSS

४ द्वौ गणे Be B G, द्वौगुण C′, द्वागणं B, द्वौगुण U (sec m )

५ MSS exc Be C′ ins तु, U (sec m ) नतु ।

६ वा ins Bu

७ U again द्वौगुणं, गणं the other MSS., गुणं C′

८ न given by Be C′ U (sec m ), not by B Bu G U (pr m )

II 143 2 आभिचारे मन्त्रामन्त्र इति ॥ मन्त्रवती स्यादिति बौधायनस्य ॥ तूष्णीकेति शालीकिः । ॥

II 143 15. पुनः समूहति समूह्यावद्यतीति ॥ सूत्रं बौधायन ॥ स्यैतैरेव मन्त्रैः प्रतिसमूह्यावद्येदिति शालीकिः । ॥

II 144 7 त्रयस्त्रिंशत्कपालं पुरोडाशं निर्वपतीति ॥ सूत्रं बौधायनस्य ॥ संदिग्धपुरोडाश एवैष स्यादिति शालीकिः । ॥

II 146. 3 (147. 17) वर्षाह्वस्तम्बस्याभिहोम इति ॥ सूत्रं बौधायनस्य ॥ यत्रैव वर्षाह्वस्तम्बः स्यात्तद्गच्छेदिति शालीकिः । ॥

II 148 4 कृष्णाजिनस्यावधवन[1] इति ॥ अन्तर्वेदि तिष्ठन्कृष्णाजिनमवधुनुयादिति बौधायनो ॥ बहिर्वेदीति शालीकिः । ॥

II 148 6 अञ्जःसवकारीयं करण इति ॥ कुर्यादिति बौधायनो ॥ न कुर्यादिति शालीकिः । ॥

II 151 1 संसर्गे[2] प्रायश्चित्तकरण इति ॥ सूत्रमाचार्ययोर् ॥ चो ह स्माहौपमन्यवो यो नु खल्वाहवनीयो ऽत एवैष उद्धृतो भवति । शामयोनिरन्वाहार्यपचनस्तत्रतत्र[3] नास्ति प्रायश्चित्तं । प्रशस्तो हि वृथाग्निसंसर्ग इति । ॥

इतीत्वा[4] इमा इष्टयो व्याख्याताः ॥ ४ ॥ द्वितीयः ॥

---

१ Thus G, °स्यावयवन U, °स्यावधाम Bu Be C′, °स्यायवन B, °स्यायवन the Viv

२ संवर्गे B Bu G

३ तत्रवा Be C′

४ इतीत्त्वा B C′ Be

5 अभिक्रामं जुहोतीति ॥ कियति नु खल्वेतदङ्कं भवतीति ॥ पञ्च प्रयाजा इति बौधायनो ॥ यत्प्राक् शालाया इति शालीकिः । ॥

6 यदि पशोरवदानं नश्येदाज्यस्य प्रत्याख्यायमवद्येदिति ॥ स ह स्माह बौधायनो यदि पशोरवदानं नश्येद्यद्येकं यदि द्वे आज्यस्य[१] प्रत्याख्यायमिष्ट्वा तत्कृत्वा[२] पुनर्यजेतेत्य॥चो ह स्माह शालीकिर्यदि पशोरवदानं नश्येद्यद्येकं यदि द्वे आज्यस्य[१] प्रत्याख्यायमिष्ट्वा तत्कृत्वा[३] कृतमेव मन्येताथ यदि भूयो ऽथैवं कुर्यादिति । ॥

2 सम्प्लव इति ॥ यत्र क्वच नाव्या[४] वा[४] नदी[४] स्यादन्तरेणोदयच्चवती[५] वासम्प्लवस्तत्रेति बौधायनो ॥ यत्र क्वचन शब्दा न सम्सृज्येरन्नसम्प्लवस्तत्रेति शालीकि॥यत्र क्वचनान्तरेणेयादसम्प्लवस्तत्रेत्यौपमन्यवः[६] ॥ प्रस्थयोरेव जनपदयोरसम्-

---

१ Some of the MSS चाज्यस्यैव ।

२ न ins B

३ After कृत्वा G B ins. न पुनर्यजेत (or ॰तेति), but cp infra XXIII 8

४ Thus G B (नावा नार्या the Viv ), नाव्यावा नदीव Bu U (pr. m ), नाव्यवायानदी U (sec m ), नाव्यवाया नदी C′, नाव्यापाया नदी Be

५ Thus G and B (the latter only ॰ति), ॰रेणोदपच्चमावति Bu U, ॰रेणोदःत्यती Be C′ (pr m ), ॰रेणोदापश्चती C′ (sec m ) The Vivarana उदकयच्चस्यो (?) भावः यच्चो पाद्यः । उदकपाद्यवती ।

६ Thus B G Bu U (pr. m ), क्वचनोदकमंतरेणेयाद॰ U (sec m.), क्वचनोदकर्मतपेयाद॰ C′, ॰नोदकमंतपेयाद॰ Be, but in the Vivarana there is no mention made of water, परस्परमकडाद्यन्तरा गच्छेदिति ।

सवस्त्वेत्यौपमन्यवीपुत्रो ॥ नाविद्विषाणयोः सꣳसवो विद्यत इति छागलेयब्राह्मणं[१] भवतीत्याञ्जीगविः । ॥

II 157 3 अभिभूतीनाꣳ होम इति ॥ आध्वरा हुत्वा सान्नायणिका[२] जुहुयादिति बौधायनः ॥ सान्नायणिका[२] एवेति शालीकिः । ॥

I 162 18 दीर्णप्रवृत्तेष्विति ॥ सूत्रꣳ शालीकेरत्रो ह स्माह बौधायनो याभ्यामेतदृग्भ्यां[३] पूतभृदाधवनीययोर्जुहुयात्ताभ्यां[४] ग्रहे-ग्रहे जुहुयादथ तूष्णीꣳ सꣳस्रावमवनयेदिति । ॥

II 167 6 नित्ये ग्रहणे वैष्णवीमृचमनुवर्तयतीति ॥ सूत्रं बौधायनस्य ॥ पृषदाज्य एवैषानुवर्तयितव्या भवतीति शालीकिः । ॥

II. 169. 5 स उक्थमुक्थं वेव प्रतिगीर्योक्थशा इत्याह सवनꣳसवनं वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥

I. 171 8 (172 14) पृष्ठ्यग्रहाणां ग्रहण इति ॥ सूत्रꣳ शालीकेरत्रो ह स्माह बौधायनो यत्र क्वचैतान्यहानि संगच्छेयुर्गृह्णीयादेव तत्र पृष्ठ्य-ग्रहानिति ॥ संवत्सर एवैते दृष्टा भवन्ति । संवत्सर एवैना-न्गृह्णीयादित्यौपमन्यवः[५] । ॥

---

१ Thus B G Be C' °लयंब्रा° Bu °लेयाब्रा° U (pr m), °लब्रा° U (sec m), °लेयिब्रा° the Vivaraṇa

२ साना° the MSS

३ Thus (and cp infra p 157, 8) G Bu U (pr m), °भ्यामेवच° Be U (sec m), °भ्यामेवतद° B, यत्रामेवच° C'

४ पूतभृताधवनीयेज° U (sec. m.). पतभृदाधवनीयेजु° G B U (pr. m)

५ एवैनग्र° all.

पृष्ठ्यग्रहाणां भक्षण इति ॥ स ह स्माह बौधायनोऽनुसवनभक्षेण[1] चैवैनान्भक्षयेन्नित्येन चेति ॥ नित्येनैवेति शालीकिः । ॥

अꣳशूनां प्रवृꣳहण[2] इति ॥ एकैकशः प्रवृहेदिति[3] बौधायनः ॥ सर्वान्सहेति शालीकिः । ॥ ५ ॥

आधवन[4] इति ॥ व्यतिचारमाधुनुयादिति बौधायनो ॥ यथाधवित्रमिति शालीकि॥र्मैत्रयेदित्यौपमन्यवः । ॥

अꣳशोर्होम इति ॥ सूत्रं शालीकेर॥त्रो ह स्माह बौधायनो याभ्यामेतदृग्भ्यामुपस्पृशेत्ताभ्यामेनं जुहुयाद॑थ तूष्णीमुपस्पृशेदिति । ॥

पृश्निग्रहाणां ग्रहण इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

तेन कक्षमुपोषतीति ॥ सूत्रं बौधायनस्यापूपेनैवाप्यत्र कक्षमुपोषेदिति शालीकिः । ॥

ऋषभो गोषु जीर्यतीति ॥ सूत्रꣳ शालीकेर॥त्रो ह स्माह बौधायनो यमप्यन्यं बर्हिस्तन्त्रात्पशुमालभेत तत्राप्येतानि कुर्यादुपाकरणीययोर्वपायां देवतास्विति । ॥

---

१, नुसवनंभक्षेण B G U (pr m), नुसवनभक्षण Bu, नुसवनभक्षणेनैवैना० U (sec m) C′, Be corrupt

२ Thus (cp XIV 12 173 7) B Bu G and the Viv, प्रवंहण Be, प्रवहण U C′.

३ प्रवहे० or प्रवहये० the MSS exc G

४ अथायवन Bu.

[ 178 9 अष्टापद्यै गर्भस्य वसाहोम इति ॥ सूत्रं बौधायनस्य ॥ न गर्भस्य वसाहोमं जुहुयादिति शालीकि॥र्नं च गर्भस्य वसाहोमं जुहुयान्नेडां न स्विष्टकृतमित्यौपमन्यवः । ॥ ६ ॥ तृतीयः ॥

179 9 अजवशाया उपाकरण इति ॥ सूत्रं बौधायनस्य ॥ वायव्ययैवैनामुपाकुर्यादिति शालीकि॥रन्यो ह स्माह ज्यायान्कात्यायनो यथाप्युपाकरण उपाकरणं नुदत एवमेवाप्युत्तरे मन्त्रा नुदेरन्निति । ॥

180 5 यदालब्धायामभ्रो भवतीति ॥ स ह स्माह बौधायनो यद्यहान्तश्रिता[१] अकृष्णा मेघाः स्युः संस्थापयेदेवाथ चेत्कृष्णाः स्युरथैवं कुर्यादित्य॥न्यो ह स्माह शालीकिर्यद्यह नादित्यमन्तर्दध्युः[२] संस्थापयेदेवाथ चेदेनमन्तर्दध्युरथैवं[३] कुर्यादिति ॥ नालब्धायामसंस्थापनं[४] विद्यत इति गौतमः । ॥

180 17. जयेष्विति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥ ॥

[ 181 5, 16 अभ्यातानेष्विति ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्या॥न्यो ह स्माहौपमन्यवोऽभ्यातानाञ्जयान्राष्ट्रभृत इति स्रुवाहुतीरेवैता जुहुयाद्रुक्मेयुश्च दर्शपूर्णमासावभ्यातानाञ्जयान्राष्ट्रभृत इति । ॥

---

१ ? यद्यहान्मासिता Be C′, यद्यहांतश्रिता B G U, यदिहातश्चिता Bu

२ Thus U, यद्यहर्नादित्य B G Be C′, यद्यहवादित्य० Bu

३ Thus Be C′ U (sec m ), एनम् om. B Bu G U (pr. m.), ०थैवंनकुर्य० C′

४ नलब्धा० G U — ०यासंस्थापनं Bu, but the Viv has असमापनम् ।

शम्यापरिधिष्विति[1] ॥ शम्यैव शम्यापरिधीन्कुर्यादिति[2] बौधायनः ॥ प्राकृता एवैताः[3] स्युरिति शालीकिः । ॥

द्विःस्वाहाकारꣳ राष्ट्रभृतो जुहोतीति ॥ विग्राहं जुहुयादिति बौधायन ॥ द्वे द्वे सुवाकृती इति शालीकिः । ॥

अधिदेवने जुहोति रथमुखे जुहोति रथनाड्यां[4] जुहोतीति ॥ सूत्रं बौधायनस्य ॥ तदग्नीन्येवैतानि[5] स्युरिति शालीकिः । ॥

नैयग्रोध औदुम्बर आश्वत्थः प्लाक्ष इतीध्मो भवतीति ॥ सूत्र बौधायनस्य ॥ पृथगेवैतानीध्मान्यभ्यज्य पृथगभ्यादध्यादिति शालीकिः । ॥

३ १० यद्वाचः क्रूरं तेन वषट्करोतीति ॥ सूत्रꣳ शालीकेर् ॥ चो ह स्माह बौधायन उदश्वित्सारमिश्रमर्कपर्णेन[6] सह[7] जुहुयाज्जुहोति वा कण्डिति वा वषट्कुर्यादिति । ॥

---

१ Thus Bu C′ and the Viv , शम्याः प० the other MSS

२ Conjecturally (Viv : शमीवृक्षस्य शम्याकाराः), शम्यायै शम्यान्परि० B G U, शम्ययैव शम्यान्परि० Bu, शम्यायै परि० Be C′

३ एवैता all

४ नाभ्यां Bu U C′

५ Thus C′ U (sec m), ०तदग्नित्येव Be, ०तदन्येवै० B Bu G U (pr m) The Viv एव (r एत) दग्नीन्वे (1 न्ये) व । एतेष्वेव होमाः । नास्त्यग्निस्तवतचेति ।

६ Emended, उदश्वितत्त्वा० Be, उदश्विदतत्त्वा० C′, दुदश्वतत्त्वा० B G, दश्वि-तत्त्वा० Bu, उदिश्वदत्त्वा० U.

७ om Be C′

II. 187 8 प्रसव इति ॥ स ह स्माह बौधायन उभयेन प्रसौयाद्वासिष्ठीयाभिश्च सावित्रेण चेति ॥ सावित्रेणैवेति शालीकिः । ॥ ७ ॥

II 1 II 187 16 sqq अतिक्रामेष्विति[१] ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II 188 10 sqq अतीमोक्षेष्विति[२] ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

II 191 2 प्राणग्रहाणां ग्रहण इति ॥ सूत्रं बौधायनस्य ॥ संवत्सर एवैते
II 1 दृष्टा भवन्ति । संवत्सर एवैनान्गृह्णीयादिति शालीकिः । ॥

II 192 10 तां दुग्ध्वा ब्राह्मणाय दद्याद्यस्यान्नं नाद्यादिति ॥ सूत्रꣳ
II शालीकेर्॥ नो ह स्माह बौधायनः प्राक् चेद्दिजिज्ञासायै[३] निषीदेदथैव कुर्यादिति । ॥

II II 195 3 यस्याहवनीये ऽनुद्वाते गार्हपत्य उद्वायेदिति ॥ सूत्रꣳ शालीकेर्॥ नो ह स्माह बौधायनः समस्तमेतमग्निꣳ सते समुप्य दक्षिणेन विहारं पर्याहृत्य गार्हपत्यस्यायतनाद्भस्मोद्वाप्य शकृत्पिण्डेन परिलिप्य न्युप्योपसमाधाय ज्वलन्तमाहवनीयमुद्धृत्याहवनीयस्यायतनाद्भस्मोद्वाप्य शकृत्पिण्डेन परिलिप्य न्युप्योपसमाधाय समिद्वत्याहवनीये षट् स्रुवाहुतीर्जुहुयादुद्बुध्यस्वाग्ने

---

१ Thus G (see m) and the Viv, °क्रमे° the other MSS. Vol II 187 15 is to be corrected ऽतिक्रामाणा° ।

२ °मतो° Be C' and the Viv, °मति° the other MSS.

३ Thus B G and the Viv, प्राक्चेतृजिज्ञासायै Bu, प्राक्चेञ्जिज्ञासायै C', प्राक्चजिज्ञासयै U

त्वमग्ने सप्रथा असि मनो ज्योतिर्जुषतां तन्तुं तन्वन्नुदु त्यं चित्रमिति । ॥

अतिरिक्तसोमेष्विति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

ध्रुवे परिहीणे प्रायश्चित्तकरण इति ॥ स ह स्माह बौधायनः प्राक् चेदवभृथाच्छन्दोगबह्वृचेषु लभेरन्नभ्यावर्त्तयेयु स्तुतशस्त्राणि स्युस्तत्कृत्वा पुनर्यजेतेत्य॥थो ह स्माह शालीकिः प्राक् चेदवभृथाच्छन्दोगबह्वृचेषु लभेरन्नभ्यावर्तयेयु स्तुतशस्त्राणि स्युस्तत्कृत्वा कृतमेव मन्येतेति । ॥

अह्नां ग्रहण इति ॥ सूत्रं बौधायनस्य ॥ यदेवानन्तरमहः स्यात्तस्मिन्नैवावहरणाग्राम्यहाङ्गटक्लीरन्निति शालीकिः । ॥

यूपे विरूढे प्रायश्चित्तकरण इति ॥ सूत्रं बौधायनस्या।-न्तस्तन्त्रमेव यूपे विरूढे प्रायश्चित्तं कुर्यादिति शालीकिः । ॥

यस्य सोम उपदस्येत्सुवर्णꣳ हिरण्यं द्वेधा विच्छिद्यर्जीषेऽन्यदाधुनुयाज्जुहुयादन्यदिति ॥ सूत्रं बौधायनस्य ॥ सहिरण्या एवास्यात ऊर्ध्वं मुख्याश्चमसा ह्रियेरन्नभ्युन्नीयेरन्निति[1] शालीकिः । ॥

आदारसोमेष्विति ॥ सूत्रं बौधायनस्यादारसोमेनैवाप्यन्यमागमयेरन्निति[2] शालीकिः । ॥

---

१ Corrected, °भ्युन्निरन्निति B G Bu U (pr m), °भ्युपनीरंनिति or °रन्निति Be C′ U (sec m)

२ Thus B G, °नवाप्यन्यमाग° Bu, नैवान्योन्यमाग° Be C′ U (sec m)

II 203 4 आशिःष्विति ॥[1] आशिषो ऽनुवर्तेरन्निति बौधायन ॥
एता[2] एवाशिषः स्युरिति शालीकिः । ॥ ८ ॥ चतुर्थः ॥

II 245 1 sqq अथातो द्वादशाहं व्याख्यास्यामः ॥

II 1 II. 247 1 चिन्वीत द्वादशाहे ऽग्निमिति बौधायनो । न चिन्वीतेति शालीकिः । ॥

अतिग्राह्य[3] इति ॥ स ह स्माह बौधायनो गृहपतिरेवा-
रण्योः[4] समारोपयेदेतदतिग्राह्यस्य रूपं भवतीत्य॥थो ह स्माह
II शालीकिः पृथगेवारणीषु समारोपयेरन्गृहपतेरेव प्रथमस्य
मथित्वा ज्वलत्सु ज्वलतो ऽपि[5] विसृजेरन्नित्येतदतिग्राह्यस्य[5]
II रूपं भवतीति । ॥

II 245 7 सनिवाप[6] इति ॥ स ह स्माह बौधायनः संनिवपयन्तो
II ऽग्नये ब्रह्मण्वते पुरोडाशमष्टाकपालं निर्वपेयुरग्नये क्षत्रवते ऽग्नये
क्षत्रभृत इत्य॥थो ह स्माह शालीकिरग्निसंयोजनी[7] खल्वेषेष्टिर्भ-

---

१ Before आशिषो U has (rightly?) आशीष्वव (r. आशिःष्वव,) C' reads, आशीष्ववाशीष्वित्याशिषो।

२ Thus B U C', the Viv., एत the other MSS

३ Thus U (sec. m.) and C' originally, अतिग्राह the other MSS

४ Thus G B, गृहपतेरेवा॰ Bu Be C', गृहपतिना॰ U

५ Thus B Bu G, ॰तोनिसृ॰ Be, ज्वलत्सुज्वलतोपिनिसृ॰ U (sec. m.).

६ Thus B G and cp. XXVI 12, संनिवापन U (sec. m.) C' Be, संनिधाप Bu.

७ Thus B Be, ॰यजना Bu G U C'

वति । यत्रैवाग्निं चेष्यमाणः स्यात्तत्रैनां निर्वपेदिति ॥ प्राजापत्यं[१] पशुपुरोडाशमनुवर्तयेतेत्यौपमन्यवः[२] । ॥

1 पवन इति ॥ एकैकश एवैनान्पवयित्वैकैकश उद्दानयेयुरिति बौधायनः ॥ सकृदेवैनान्पवयित्वैकैकश उदानयेयुरिति शालीकिः ॥ सकृदेवैनान्पवयित्वा सर्वान्सहोद्दानयेयुरित्यौपमन्यवः । ।

2 आर्षेयवरण इति ॥ स ह स्माह बौधायनो ये केचन समानगोत्रा अव्यवेता अन्यथागोत्राः[३] स्युरेकस्यार्षेयस्य[४] वरण[४] एव तेषां वरणं स्यादित्यत्रो ह स्माह शालीकिर्यदि चैव व्यवेता यदि[५] चाव्यवेताः[५] समानगोत्रा एकस्यार्षेयवरण[६] एव तेषां वरणं स्यादिति । ॥

3 व्रतधुक्षिति ॥ समानत्र समावच्छो विभजेरन्निति बौधायनः ॥ पृथगेवैषां[७] व्रतदुघः स्युरिति शालीकिः । ॥

---

१ प्राजापत्यस्य the MSS

२ Thus U (sec m ), ॰नुवर्तवेत्यौ॰ B G U Be, ॰नुनिर्ववेतेत्यौ॰ C′, ॰नुवर्तेतय्यौ॰ Bu

३ ? अन्यथाद्दौत्रा Be, अन्यथोद्दोत्रा C′, अन्यथाद्दोरात्रा Bu, अन्यथा अद्दोरात्रा U, अन्येष अगोत्रा G B , अन्यायागोत्रा the Viv (one copy), अन्यथासगोत्रा॰ (another copy)

४ स्युरेक आर्षेयसंवरण C′, स्युरेक आर्षेयताः समानगोत्रा एकार्षेय वरण Be

५ Only in C′ B and U (sec m ),

६ ॰र्षेयंवरण or वरण U Be C′ On the whole difficult passage cp Āp XXI. 3 4

७ एव om G and the Viv

II. 247 1. षष्ठ्यामुपसद्युत्तरवेदिꣳ संनिवपन्तीति सूत्रमाचार्ययोरपि[१] वैकादश्यामिति विधिः[२] ॥

II. 247 7. वसतीवरीणामभिग्रहण[३] इति ॥ सूत्रꣳ शालीकेरथो ह स्माह बौधायनो यदि सातिशेषः कलशः स्यात्तूष्णीमवनयेद्यद्यु वै सर्वश एव लेपः समवनीतः स्याद्यथैवं[४] कुर्यादिति शालीकिः ॥

II. 247 12. सो ऽत्र[५] वैव[५] यज्ञस्य पुनरालम्भं जपति यज्ञायज्ञीयस्य वा स्तोत्रे शंयुवाके वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकिः ॥

II. 248 1. विवर्तयन्ति परिधीननुप्रहरति[६] प्रस्तरमिति ॥ सूत्रं बौधायनस्यानुप्रहरेदेवात्र प्रस्तरपरिधीनिति शालीकिः ॥ ९ ॥

II. 248 5. निमील्याध्वर्युरुपांꣳशु[७] जुहोतीति । सूत्रं बौधायनस्यानन्वीक्षमाण एव जुहुयादिति शालीकिः ॥

१ Before अपि Be ins. अथोह स्माहौपमन्यवो, C' अथो° वा, U अथोह स्माह बौधायनो । cp XXVI 12

२ Thus B G, °मिति वाधिः Bu, मिति मासि U, °मिवस्कं Be C'

३ Thus the Viv and cp XXVI 12, °मभिग्रहण Be C', °मिति ग्रहण the other MSS

४ Thus Be G, °द्यथैव C', °द्यथैवैवं Bu B U

५ Thus B U G Bu the Viv (one copy), चैव Be C' the Viv (another copy).

६ °हरति Be G Bu U; °हरति Be C'

७ Read °पांꣳशुं ?

श्रिल्पैरुपाकरण इति ॥ स ह स्माह बौधायन उभयेनोपाकुर्याद्बर्हिर्भ्यां च श्रिल्पैस्रेति ॥ श्रिल्पैरेवेति शालीकिः । ॥

न्यूङ्खन इति ॥ विराजां[१] वा प्रतिपत्सु न्यूङ्खयति[२] श्रस्त्रे[३]वेति[३] ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

निर्मन्थ्यस्य मन्त्रामन्त्र इति ॥ मन्त्रवान्स्यादिति बौधायनस्तू॥ष्णीक इति शालीकिः । ॥

दाक्षिणानाᳲ होम इति ॥ स ह स्माह बौधायनो जुहुयादेवाहुतीर्जपेत्प्रत्ययमन्त्रानित्य॥न्नो ह स्माह शालीकिर्जुहुयादेवाहुतीर्न तु[४] प्रत्ययमन्त्राञ्जपेदिति ॥ ये केच दक्षिणायुक्ता मन्त्राः स्युर्नैवैनानाद्रियेतेत्यौपमन्यवः । ॥ १० ॥

**पञ्चमः ॥**

अविवाक्य इति ॥ अविवाक्यमेतदहर्भवतीति बौधायनो ॥ विब्रूयादेवेति[५] शालीकिः । ॥

ऋचामुद्धरण इति ॥ सूत्र बौधायनस्य ॥ यथाप्रकृतिमेवाध्वर्युः कुर्याच्छन्दोगबह्वृचा एव प्रतिकुर्वीरन्निति[६] शालीकिः । ॥

---

१ विराजां G C′, विराजा Be Bu, विरजां U, विवजा B

२ ॰यंति all exc C′

३ श्रस्त्रैवेंति all

४ Found in Be C′ U G (sec m ), the other MSS om

५ Thus corrected, निब्रू॰ B G, तिब्रू॰ Bu, नुब्रू॰ Be C′ U (sec m ), निर्ब्रू॰ U (pr m )

६ प्रतिविकु॰ B G U (pr m )

II 255 13 सर्पण इति ॥ कृष्णाजिनान्तैः सर्पन्त उत्तरꣳ हविर्धान-
II 247 मुपस्पृशेयुरिति बौधायनो नोपस्पृशेयुरिति शालीकिः ॥
II 257 आग्रयणाग्रेष्विति ॥ वाचंयमो ऽध्वर्युः पूर्वान्ग्रहस्थान्
II 247 f sqq गृह्णीयादिति[1] बौधायनो विसृष्टवागिति शालीकिः ॥
स[2] शुक्रं गृहीत्वा धारयति यावदितरौ ग्रहौ गृह्णातीति ॥
सूत्रं बौधायनस्य यं यं गृह्णीयात्तं तं परिमृज्य सादयेदिति
शालीकिः ॥
II 247 ग्रहाधानेष्वनुसंव्रज्याथा[3] इति ॥ अनुसंव्रजेदिति बौधा-
यनो नानुसंव्रजेदिति शालीकिः ॥
II 258 1. II 248 पशुकल्पेष्विति ॥ सर्वे कल्पा बौधायनस्यैन्द्राग्नपशून्येवा-
हीनरात्रिसत्त्राणि भवन्तीति शालीकिः ॥
II 261 2. II 248 तेषां यानि समहाव्रतानि तानि साग्निचित्यान्यथेत-
राण्यौत्तरवेदिकानि स्युरिति बौधायन ऐकाहिकस्त्वेवाग्नि-
रिति शालीकिः ॥
II 262 12 आचीयेष्विति[4] ॥ अभिजिद्विषुवान्विश्वजिद्दशममहर्मेधा-

---

१ ग्रहस्थानान्गृ॰ B

२ स given only by U (sec m ) C′ and the Viv.

३ Thus B G (sec m ) C′ (sec m ) U आयोजमाधानेषु॰ Be, ग्रहस्थानेषु॰ Bu, the Viv ग्रहा आधीयन्ते इष्विति।

४ Thus (heteroclitic locative? from आचीयत्) Be C′ U (cp Ap XXIII 9 6 आचयन्ति), आचीयेष्विति B G the Viv, आजीयेष्विति Bu.

व्रतमित्येतान्याचीयन्ति[१] भवन्तीति बौधायनो ॥ यान्यन्यानि पृष्ठ्याभिप्लवेभ्य इति शालीकिर्यानि चान्यानि पृष्ठ्याभिप्लवेभ्यो दशमाच्चाह्न इत्यौपमन्यवः ॥ प्रायणीयारम्भणीयावभिजिद्विषुवान्विश्वजिद्दशममहर्महाव्रतमुदयनीयो ऽतिरात्र इत्येतान्यष्टावाचीयन्ति[२] भवन्तीति गौतमः ॥

पशुकल्पेष्विति ॥ सर्वं कृत्वा बौधायनस्यैकादशिनपशून्येव सांवत्सरिकाणि सत्त्राणि भवन्तीति शालीकिः ॥

वाणः शततन्तुर्भवतीति ॥ सूत्र बौधायनस्य ॥ वीणैवैषा[३] तन्त्रीभिः[४] शततमा[५] स्यादिति शालीकिः ॥

अहर्गणे माहाव्रतिकानां[६] शिल्पानां करण इति ॥ कुर्यादिति बौधायनो ॥ न कुर्यादिति शालीकिः ॥

अहर्गणे शिखानामनुप्रवपण इति ॥ अनुप्रवपेरन्निति बौधायनो ॥ नानुप्रवपेरन्निति शालीकिः ॥ ११ ॥ षष्ठः ॥

---

१ °तान्यचीयती Bu, °तान्याचीयानि B G, the other MSS wholly corrupt, cp XXVI 17

२ °ष्टावचियंति U °ष्टावचीया Be, °ष्टावचीय C′, °ष्टावचीयानि B G, °ष्टावाचियेती Bu

३ वाणैवैषा C′, वीणैवैषा Be, U (sec m), वीणैवैषा G, वीणैवेषां Bu B, वीणैवेषा U (pr m)

४ Thus G U C′, तंत्राभिः Bu, त्रीभिः Be, तंत्रे भि· B

५ Uncertain, शततमा B Bu G U (pr m) C′ (sec m.), शततनु Be U (sec m), शततनुर C′ (pr m)

६ Thus B G Be, महा° or मह° Bu U C′ and the Viv.

II. 269. 10. द्विरात्र इति॥ सूत्रं बौधायनस्य॥ यजनीये ऽहन्पूर्वमहर्भवत्युत्तरस्मिन्नुत्तरमिति शालीकिः।॥

II. 270. 5. तस्मिन्नुन्नतो वेद्द्दामन इति भवन्तीति॥ उपवैते[१] नित्याः सहस्रे स्युरिति बौधायन॥ एत[२] एव[२] सहस्रतमाः[३] स्युरिति शालीकिः।॥

II. 271. 10. द्रोणकलशस्यात्रप्रापण इति॥ अन्तःपरिध्यवप्रापयेदिति बौधायनो॥ बहिःपरिधीति शालीकिः।॥

II. 272. 3. रूपाणाꣳ होम इति॥ सूत्रं बौधायनस्या॥श्वमेधिकान्यप्यत्र[४] रूपाणि जुहुयादिति शालीकिः।॥

II. 274. 1. उद्यत्स्तोमेष्विति॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीके।॥

II. 274. 9. औपसदानां पुरोडाशानां मन्त्रामन्त्र इति॥ मन्त्रवन्तः स्युरिति बौधायन॥स्तूष्णीका इति शालीकिर॥ग्नेया एककपालाः स्रुवाहुत्या चैनान्सह सकृज्जुहुयादित्यौपमन्यवः।॥

II. 275. 8. द्वयीर्गा उपकल्पयन्त इति॥ सूत्रं बौधायनस्या॥जा अप्यत्रोपकल्पयीरन्निति,[५] शालीकिः।॥

---

१ Thus G B, उपवैति Bu, उपेवे U, उतवैते Be, अतवंते C'

२ Thus B G U (pr. m.) एता एव Be C' U (sec. m.), एतमेव Bu

३ सहस्रतमा MSS., omitted by Be C' (pr. m.)

४ Uncertain and partially emended, ॰नस्याश्वमेधिकस्यापत्र C', ॰नस्य आश्वमेधिकस्याप्यत्र Be U, ॰नस्य आश्वमेधिकायनस्य आश्वमेधिकान्यपत्र B G, ॰नस्याश्वमेधिकायतस्याश्वमेधिकान्यप्यत्र Bu

५ ॰कल्पयेर॰ C', अत्र om. Be

उलूखलबुध्नो यूपो भवतीति ॥ सर्वाङ्कारान्कुर्यादिति[१] बौधायनः॥ प्रोच्छ्यैनमुच्छ्रयेदिति शालीकिः॥ प्रोच्छ्योपास्य[२] यूपशकलमुच्छ्रयेदित्यौपमन्यवः। ॥

पाꣳसूनामनुसꣳहरण इति ॥ धिष्णियेभ्य औदुम्बर्या अवटादुपरवेभ्य उत्करादुत्तरवेद्यै पाꣳसूननुसꣳहरेदिति बौधायनो॥ नानुसꣳहरेदिति शालीकिः। ॥

अथ यदि दीक्षोपसत्सु प्रत्ययमाचक्षीरन्संप्रकीर्येरन्संप्रकीर्यादवसा-नीयाभिरिष्टिभिरिष्ट्वोत्तिष्ठेयुरिति[३] बौधायन॥ एकाहꣳ[४] सुत्योत्तिष्ठेयुरिति[४] शालीकिर्॥८नासꣳस्थाप्य पृष्ठ्यꣳ षडहमुत्ति-ष्ठेयुरित्यौपमन्यवः। ॥ १२ ॥

तेषामुत्थानेष्विति ॥ गच्छेयुरावभृथादिति बौधायनो॥ ऽग्निष्टोमान्ता इति शालीकि॥ ध्रुवान्ता इत्यौपमन्यवः। ॥

जनकसप्तरात्रो[५] ऽतिरात्रः पृष्ठ्यः षडह इति बौधायनः॥ पृष्ठ्यः षडहो ऽतिरात्र इति शालीकिः। ॥

१ सर्वकाराङ्कु॰ Bc, सर्वाकाराङ्कु॰ C′, सर्वाङ्कामाङ्कु॰ B G U, सर्वाराङ्कु॰ Bu, the Viv · सर्वाङ्कारान्। क्रियन्त इति कारा : कर्तव्याः संस्कारा ।

२ Thus Bc C′, प्रोच्छ्यौपास्य Bu, प्रोच्छ्यावास्य G, प्रोच्छ्यवास्य B, प्रोच्छ्यपावस्या U

३ इष्टिभिर् found only in G U C′

४ Thus G Bu and the Viv , एकसुत्यो॰ U, एकसुत्यो॰ B, एका एव सुत्यो॰ Bc C′

५ ॰रात्रो G Bu and the Viv , ॰रात्रे B Bc, ॰रात्रः C′ (omitting तिरात्रः)

II 277 14 दशरात्राय दीक्षिष्यमाणो दशहोतारꣳ कृत्वा दशरात्राय दीक्षत इति ॥ सूत्र बौधायनस्य ॥ सप्तहोतारꣳ कृत्वा दशहोतारं जुहुयादिति शालीकिः ॥ ॥ इति नु ब्राह्मणवान् ॥

अथ गोबलदशरात्रो ऽतिरात्रः पृष्ठ्यः षडहो वाजपेयो महाव्रतं चातिरात्रश्चाष्टमे ऽह्नि[1]वाजपेयः[1] ॥ तत्र[1]देवसुवाꣳ हविषां करण इति ॥ कुर्यादिति बौधायनो ॥ न कुर्यादिति शालीकिस्त्वं ॥ यस्मिꣳश्चास्य पशुपुरोडाशमनुवर्तेरन्नित्यौपमन्यवः[2] । ॥

विलुप्यमाने पृष्ठ्ये षडहे शिल्पानां करण इति ॥ कुर्यादिति बौधायनो ॥ न कुर्यादिति शालीकिः । ॥

II 281 16 एकषष्टिरात्रे वैश्वकर्मणादित्ययोर्ग्रहण[3] इति ॥ उत्तरे त्रिꣳशद्रात्रे गृह्णीयादिति बौधायनः ॥ संवत्सर एवैतौ दृष्टौ भवतः । संवत्सर एवैनौ गृह्णीयादिति शालीकिः । ॥

II 283 2 औदुम्बरꣳ षोडशिपात्रमिति ॥ सूत्रं बौधायनस्य ॥ खादिरमेवेति शालीकिः । ॥

II 283. 15 अतिरात्रपशूनामुपाकरण इति ॥ सूत्र बौधायनस्य ॥ सारस्वतीमेवोपाकुर्यादिति शालीकिः । ॥

१ Thus U C′, ॰चाष्टमो भवतीति वाजपेयश्च Bu, चाष्टमेवाजपेयश्च B G Be

२ ॰पशु॰ om. B Be G

३ Thus G U C′ and the Viv., णादित्यपक्षयोर्ग्रहण B Bu ॰णादित्ययोर्ग्रहण Be

षोडशिवतां चमसानां भक्षण इति ॥ व्यक्ताम्भक्षयेदिति[1] बौधायन इन्द्रपीतानिति शालीकिः ॥

रात्रिपर्यायेषु मुख्यानां चमसानामभिमर्शन इति ॥ सूत्रं शालीकेर्चो ह स्माह बौधायन इन्द्राय त्वापिशर्वरायेत्येव मुख्यंमुख्यं चमसमभिमृशेदिति ॥

आश्विनस्य मन्त्रामन्त्र इति ॥ मन्त्रवान्स्यादिति बौधायनस्तूष्णीक इति शालीकिः ॥

आश्विनस्य चर्याया इति ॥ सूत्रं शालीकेर्चो ह स्माह बौधायनः पुरस्तात्तिरोअह्नियानां[2] चमसानां चर्याया[3] अमुचाश्विनेन[3] चरेदिति ॥

तिरोअह्नियानां[2] चमसानां भक्षण इति ॥ अनुष्टुप्छन्दसा भक्षयेदिति बौधायनो जगतीच्छन्दसेति शालीकिः ॥

शुद्दतीयेष्विति ॥ एकादशधा कृत्वोपयष्टोपयजेदिति बौधायनोऽपच्छेदमिति शालीकिः समस्तान्येवैनान्यनुप्रहृत्य सर्वैर्मन्त्रैरनुमन्त्रयेतेत्यौपमन्यवः ॥ १३ ॥ सप्तमः ॥

एकादशिन्यै संप्रदान इति ॥ सूत्रं शालीकेर्चो ह

---

१ Thus Bu Be C′ and the Viv, सुव्यक्ताम्भ॰ B G U

२ Thus Bu and Viv, ॰अन्ह्याना or ॰अह्निना the other MSS

३ Thus G only, चर्याया इत्यचाश्वि॰ C′ U (sec m), चर्यावामुचाश्वि॰ the other MSS, चर्याया also the Vivarana

II 277 स्माह बौधायन एकादशाग्नीषोमीया एकादश सवनीया एकादशानूबन्ध्या[१] इति । ॥

II 292.2 उपशयस्य मन्त्रामन्त्र इति ॥ लभेत ग्रामे नारण्य इति बौधायनो॥ लभेतारण्ये न ग्राम इति शालीकिर्॥नैव ग्रामे नारण्य इत्यौपमन्यवः । ॥

II 294.16 उपशयस्योपासन इति ॥ सूत्र बौधायनस्य॥ त्वेवोत्तरत[२] उपास्येदिति शालीकिः । ॥

II 296.4 पात्नीवतस्य परिलेखन इति ॥ शालामुखीयꣳ शङ्कुमभिपरिलिखेदिति बौधायन॥ उत्तरत एकादशिन्यै पात्नीवतमिनुयादिति शालीकिः । ॥

II 281 II 296.5 त्वाष्ट्रस्य मन्त्रामन्त्र इति ॥ मन्त्रवान्स्यादिति बौधायनस्तू॥ष्णीक इति शालीकिः । ॥

II 283 II 296.6 त्वाष्ट्रस्योत्सर्ग इति ॥ सूत्रꣳ शालीकेर्॥न्नो ह स्माह बौधायनोऽभिपर्यग्निकृतमेनमन्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रमय्याङ्गिरस्युत्त्य[३] यजमानस्याजास्वपिसृजेदिति । ॥

II 283. II. 296.11 त्वाष्ट्रस्य चर्याया इति ॥ उपांशु चरेदिति बौधायन॥ उच्चैरिति शालीकिः । ॥

II 297.4 पुनश्चिताविति ॥ सूत्रꣳ शालीकेर्॥न्नो ह स्माह बौधा-

१ ०शानुबंध्या MSS

२ Thus G U and a citation in the Ms., उत्तर the other MSS

३ Thus B Be C' G U (sec. m.), ०निष्क्रमय्या० U (pr. m.), ०निष्क्रमर्या० Bu, ०निष्क्रमय्या० a citation in the Ms.

यतो यमप्यग्निं चिन्वानो[1]ऽपजानीयात्तस्मिन्नुपरि[1] पुनश्चितिं चिनुयादुत्तरतश्च यूपाद्यूपं मिनुयादिति । ॥

कौण्डपायिनीयास्विष्टिष्विति ॥ अग्न्यन्वाधानप्रतिपत्का इडान्ताः सतिष्टेरन्निति बौधायन ॥ आज्यभागप्रतिपत्का इडान्ता इति शालीकिः ॥ सपूर्णपात्रविष्णुक्रमा इत्यौपमन्यवः । ॥

पिण्डपितृयज्ञस्य दान इति ॥ अहरहर्दद्यादिति बौधायन ॥ आदित अन्ततश्च मासस्येति शालीकिः । ॥ १४ ॥

होतॄणां व्याख्यान इति ॥ सग्रहानृतेस्वाहाकारानित्ये-कस्तेग्रहानन्तःस्वाहाकारानित्येकं[2] । सर्वानित्येकं ॥ पूर्वः कल्पो बौधायनस्योत्तरौ शालीकेः । ॥

स पौर्णमासीषुपौर्णमासीषु जुहुयादग्र कृत्वः संवत्सरे जुहुयादित्येतदेकममावास्यापौर्णमासीष्वित्येतदेकं । सर्वास्वित्येतदेकम् ॥ पूर्वः कल्पो बौधायनस्योत्तरौ[3] शालीकेः । ॥

चयस्त्रिंशच्चिताविति[4] ॥ सूत्रं शालीकेरत्रो ह

---

१ Doubtful G and the Viv read as given in our text, चिन्वा-नोथजा॰ C′, चिन्वानैवजा॰ U, चित्वानोपजा॰ the other MSS We expect an optative derived from the root ज्ञा, cp ज्ञानानः XVII 17 297 5 The Viv periphrases by चौपः only

२ ॰नतस्वाहाकारा॰ MSS, but cp XX 5 5 5

३ उभौ ins. B Be G (sec m )

४ Thus C′, G U (sec m ) the Viv and a citation in the Ms, ॰स्त्रिंशच्चिता॰ B Be, ॰स्त्रिंशाच्चिता॰ Bn

II 277 स्माह बौधायनो ऽग्निग्रहणꣳ स्वयंचितिꣳ श्वेतकृष्ण-
योरभिमर्शनमधिद्रवणमवद्रवणमिति[1] सर्वमेवैतत्कर्माहृता
II 292 2 कुर्यादिति[I] ॥
I. 303 5 अहरहश्चिताविति ॥ सूत्रꣳ शालीकेर[II]चो ह स्माह
बौधायनो ऽग्निग्रहणꣳ स्वयंचितिꣳ श्वेतकृष्णयोरभिमर्शनम-
II 294. 1 धिद्रवणमवद्रवणमिति[1] सर्वमेवैतत्कर्माहृता कुर्यादिति[I] ॥
I. 307 13 रथचक्रचितौ पुरीषस्योपधान इति ॥ पुरीषस्यान्तान्कु-
II 296. र्यादिति[2] बौधायन[II] इष्टकास्वेव पुरीषस्यान्तं[3] गच्छेदिति[3]
शालीकिः[I] ॥ १५ ॥ अष्टमः ॥
I 310 2 रोहिते चर्मणीति ॥ सूत्रं बौधायनस्याप्यरोहितꣳ
II 296. स्यादिति शालीकिः[I] ॥
II 281
उभयनीतस्य करण इति ॥ उभे[4] ऋचौ[4] द्विरभ्यावर्तये-
II 296. दिति बौधायनः[II] सकृदेव ब्रुवन्द्विर्ब्रूयादिति[5] शालीकिः[I] ॥

II 283

१ Thus B G Be Bu and a citation in the Ms (cp also XXII 4
II 283. II 296. 121 18), C′ reads ०मर्शनाधिद्रविणमि०, U om ०मवद्रवण०।

२ Thus G Be, पुरीषस्यांतस्यात्कुर्या० U, पुरीषस्यतस्यांताम्कुर्या० B, पुरीषस्योतस्कुर्या० C′, Bu defective

II 297 ३ Hesitatingly corrected, पुरीषस्यामङ्कं० G, पुरीषस्यामच्छे० Be, पुरीषस्यामङ्कं० C′, पुरीपंस्यामङ्कं० U

४ उभो ऋचौ B G, उभय ऋचौ Be C′, उभयौ ऋचौ Bu, उभये ऋचौ U (sec. m) The two ṛks are, according to the Viv वायुः पूतः प्राङ् सोमः etc, and वायुः पूतः प्रत्यङ् सोमः etc., T Br II. 6 2 2-3

५ ब्रुवन om Be C′ U G (pr m), ब्रुवन् नद्विर्० Bu

प्राङ् सोमः प्रत्यङ् सोमः । प्रत्यङ् सोमः प्राङ् सोम[१] इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

सौत्रामणिकायै सुरायै संधान इति ॥ सूत्रमाचार्ययोर् ॥ चो ह स्माहौपमन्यवो यत्रैव सुरा स्यात्तत एवाहारयेदिति । ॥

सुराग्रहाणां ग्रहण इति ॥ सूत्रं बौधायनस्य ॥ पयोग्रहानप्यत्र गृह्णीयादिति शालीकिः । ॥

ताञ्जघनेन स्रुग्दण्डान्प्राचो वोदीचो वायातयतीति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

सुरासोमस्य संचर इति ॥ दक्षिणेन हृत्वोत्तरेणावनयेदिति बौधायन ॥ उत्तरेण हृत्वा दक्षिणेनावनयेदिति शालीकि ॥ र्यत एवैनꣳ हरेत्तत एवैनमवनयेदित्यौपमन्यवः । ॥

पावमानीभिरुपस्थान इति ॥ पावमानीभिरुपस्थाय पितॄणां याज्यानुवाक्याभिरुपतिष्ठेरन्निति बौधायनः ॥ पितॄणामेव याज्यानुवाक्याभिर्न पावमानीभिरिति शालीकिः । ॥

अवभृथ इति ॥ सूत्रमाचार्ययोर् ॥ चो ह स्माहौपमन्यवः शूलैश्च मासरेण चावभृथमवेयादिति । ॥

आख्यातमुदकान्तस्य प्रत्यसनम्[२] ॥

आख्यातमाप्लवनम्[२] ॥

आख्यातꣳ समिधां करणम् ॥

---

१ Thus G only, प्राङ् सोम॰ प्रत्यङ् सोमः प्राङ सोम B, प्रत्यङ् सोम प्राङ् सोम Be C′ U, प्राक्सोम Bu

२ See remark on XXI 3 73 5, 6

II 327 15 वैमृधस्यानुनिर्वपण इति ॥ सूत्रं बौधायनस्य ॥ नानिष्ट्वा
I 277 प्रथमसोमेनानुनिर्वपेदिति शालीकिः । ॥ १६ ॥

II 328 12 पौर्णमासीमेव यजेत भ्रातृव्यवान्नामावास्यामिति ॥ उभ-
II 292 यत्र पौर्णमासहविर्भिर्यजेतेति[1] बौधायनो ॥ नामावास्यायां
किंचन यज्ञरूपं कुर्यादिति शालीकिः ॥ पिण्डपितृयज्ञेन
चरेदित्यौपमन्यवः । ॥

II 294. 1
II 328 15. साकंप्रस्थायीयेन यजेत पशुकाम इति ॥ सूत्रꣳ शाली-
केर् ॥ नो ह स्माह बौधायनः स्रुग्भ्यामेव पुरोडाशं जुहुयाच्च-
II 296. मसेन सांनाय्यमिति । ॥

II. 329 11. नागतश्रीर्महेन्द्रं यजेत । त्रयो वै गतश्रियः शुश्रुवान्ग्रा-
मणी राजन्यस्तेषां महेन्द्रो देवतेति ॥ स यो ऽन्य एतेभ्यो
II 296.
281 महेन्द्रमियक्षेत[2] स संवत्सरमिन्द्रमिष्ट्वा महेन्द्रेज्यां[3] लभेतेति
बौधायनो ॥ ऽत एवापि संवत्सरमिन्द्रमिष्ट्वा महेन्द्रेज्यां[3]
II 296. लभेतेति शालीकिः । ॥

283 II 329 16, संवत्सरमिन्द्रं यजेत । संवत्सरꣳ हि व्रतं नातीति ॥
सूत्रꣳ शालीकेर् ॥ नो ह स्माह बौधायनो यस्याममावास्याया-
283. II 296.

---

II 297

१ Thus B Bu, पौर्णमासी॰ Be U G, C' injured

२ Thus (इयक्षेत and cp XVII 49 329 13 इयक्षेत) the Vivarana only, महेन्द्र यियक्षेत G (sec m) B, महेंद्रमियज्ञेत Bu ॰इयजेत Be C', ॰द्रं यक्षेत U (pr. m).

३ Thus B Bu G C', महेंद्रयाज्यां Be U

मादित इन्द्रं यष्टुं प्रक्रामेत्संवत्सरे[1] पर्यवेते तस्यां महेन्द्रं यजेत । सो ऽत ऊर्ध्वं महेन्द्रयाज्येव स्यादित्य॥न्यो ह स्माहौपमन्यवो ऽभ्यारूढः खल्वस्यैव[2] संवत्सरो भवति यस्याममावास्यायामादित इन्द्रं यष्टुं प्रक्रामेत्संवत्सरे[1] पर्यवेते या ततः पूर्वामावास्या स्यात्तस्यां[3] महेन्द्रं यजेत । सो ऽत ऊर्ध्वं महेन्द्रयाज्येव स्यादिति । ॥

दाक्षायणयज्ञेन सुवर्गकामो यजेत । पूर्णमासे संनयेन्मैत्रावरुण्यामिक्षयामावास्यायां[4] यजेतेति ॥ सूत्रं बौधायनस्य ॥ वैमृधमप्यत्रानुनिर्वपेदिति शालीकिः । ॥

सांनाय्यस्य भक्षण इति ॥ सूत्रं शालीकेर॥न्यो ह स्माह बौधायनो यजमान एवैतमर्धमासमनुनिधाय सांनाय्यं भक्षयेदिति । ॥

आमिक्षायै मन्त्रामन्त्र इति ॥ मन्त्रवती स्यादिति बौधायनस्॥तूष्णीकेति शालीकेः । ॥

इडादधे चतुश्चक्र उपांशुयाजस्य करण इति ॥ कुर्यादिति बौधायनो ॥ न कुर्यादिति शालीकिः । ॥ १७ ॥

**नवमः ॥**

बृहस्पतिसवे दाक्षिणानां होम इति ॥ अनुसवनं दाक्षिणानि

---

1 Thus (प्रक्रामेत्) C′ U and a citation by Sāyana, प्रक्रामेत G (sec m ), प्रक्रमेत् Bu Be, प्रक्रमेत B G (sec m )

2 Thus U C′, खल्वस्यै B, खल्वेवस्यैव Bu, खल्वस्य G , Be is defective

3 स्यात् given only by Sāyana in his citation

4 वा ins Be B U

जुहुयादिति बौधायनो माध्यंदिन एव सवने दाक्षिणानि
77 जुहुयाद्दामीत्येवेतरयोः[1] सवनयोर्ब्रूयादिति शालीकिः ॥

II 346 8 हिरण्येन घृतमुत्पुनातीति ॥ मन्त्रनिरुक्तमेतद् घृतꣳ स्या-
II 292 2 दिति बौधायनस्तूष्णीकमिति[2] शालीकिः ॥

II 349. 6 अनुद्धते[3] वेद्यै दक्षिणत आहवनीयस्य हुत स्तोत्र प्रत्य-
भिषिञ्चतीति ॥ सूत्र बौधायनस्य कृष्णाजिनमप्यत्रास्तृत्या-
II 294. 1 भिषिञ्चेदिति शालीकिः ॥

II 350 2 माषैः पूर्णं कमण्डलुमिति ॥ सौवर्णः सौवर्णैर्माषैः पूर्णः
II 296. स्यादिति बौधायनो मार्त्तिक[4] एव धान्यमाषैरिति
शालीकिः ॥

II 354 16 सप्तदश मारुतीः पृश्नीर्वत्सतरीरालभत इति ॥ पृथगेवासां
II 296. 31 मनोताः स्युः पृथक् पशुपुरोडाश इति बौधायनः पृथगेवासां
मनोता स्युरेकः पशुपुरोडाश इति शालीकिरेकैवासां मनोता
II 296. स्यादेकः पशुपुरोडाश इत्यौपमन्यवः ॥

33 II 356 3. II 358 9. अग्निष्टुतीन्द्रस्तुतीति ॥ सूत्र बौधायनस्य यथाप्रकृति-
मेवाध्वर्युः कुर्याच्छन्दोगवदृचा एव प्रतिविकुर्वीरन्निति
3. II. 296. शालीकिः ॥

II 360 10 अतिरिक्तस्तोत्रेष्विति ॥ पूर्वः कल्पो बौधायनस्योत्तरः
II 297 शालीकेः ॥

---

१ Thus B G Bu and the Viv , द्दामी॰ Be U C′

२ Thus G B , तूष्णीक इति B, तूष्णीमिति Be C′ U.

३ Thus the Viv., ॰द्धते U G, ॰घृते Be C′, ॰हृत B

४ मार्त्तिक G U C′ Be and Viv., चार्त्तिक B, चालीक Bu.

धनुषः प्रदान इति ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

एकाहानामन्त इति ॥ सूत्रं बौधायनस्य । मृत्युसवान्त इति शालीकिः ॥

निदधत्यस्मा एतद्धविरुच्छिष्टं व्रतभाजनमिति[१] ॥ सूत्रं बौधायनस्य ॥ नात्र हविरुच्छिष्टं व्रतभाजनं[१] निदध्यादिति शालीकिः ॥

अथास्याꣳ सद्यस्क्रियामनुक्रियां परिक्रियामतिक्रियां प्रवर्ग्यस्य करण इति ॥ कुर्यादिति बौधायनो ॥ न कुर्यादिति शालीकिः ॥

ग्रावाणसो ऽधिषवणे फलके पुरुषास्यस्य वृषणाविति ॥ सूत्रं बौधायनस्य ॥ ग्रावाणसो ऽप्यचारणौ कुर्यादिति शालीकिः ॥

स यं कं च[२] ग्रहं गृह्णात्येवमेवैनं गृह्णाति । यदु किं च पात्रꣳ सादयत्येवमेवैनत्सादयतीति ॥ सूत्रं बौधायनस्य ॥ यंयं ग्रहं गृह्णीयात्तंतं परिमृज्य सादयेदिति शालीकिः ॥

श्वेतमश्वं ददाति । श्वेतां वडबां ददात्यश्वमसितं ददाति । गर्भिणीं वडबां ललामीं ददात्यनडुत्कृतं[३] ददाति । त्रय-

१ Thus B Bu G (sec m ), ०भोजन० Be C′ U G (pr m )

२ चन G (sec m.) and the Viv , चन B

३ Thus C′ only (sec m ), all the other MSS corrupt (०त्यनडुहं-वचं ददाति , ०त्यनडुहं ददाति, ०त्यनडुहं ददाति वचं ददाति)

II. 379 11, 382 11, 388 9, 406 8, 9 स्त्रिंशतं निष्कान्ददाति[१]। सोमचमसं ददाति। हिरण्मयं चमसं ददाति। राशिकृतं[२] धान्यं ददाति। मरायकृतं धान्यं ददातीति[३]॥ एतानि च नित्यानि च दद्यादिति बौधायनः॥

II 292 2 एतान्येवेति शालीकिः[४]। ॥ १८ ॥

[५]अथातः सर्वतोमुखं व्याख्यास्यामः॥

II 294. 1 चिन्वीत सर्वतोमुखे ऽग्निमिति बौधायनो॥ न चिन्वीतेति शालीकिरथो ह स्माह मौद्गल्यः पूर्वस्मिन्नेवाग्निचय

II 296. 4 इतरेषु सावित्राः स्युरित्येतदपि न कुर्यादित्याश्मीगविः।॥

अरण्योः समारोपण[६] इति॥ सूत्रमाचार्ययोरथो ह स्माह गौतमो गृहपतिरेव प्रथममरण्योः[७] समारोपयेत[८] इतरे मन्त्र

II 296 इति।॥

---

१ निष्कं ददाति MSS., but cp XVIII 38 388 9.

II 296. २ Thus Be C′ Bu U, राशी° B G (sec m)

३ इति found in C′ only

४ The words एतान्येवेति शालीकिः are repeated in Be Bu U W C′, indicating the end of a prasna

II. 296. ५ This kandikā is not found in Be C′ Bu W U, in U it is given on a loose page The text of this, doubtless later added, chapter is given according to B G (where it is given secunda manu), a complete citation in Kesavasvāmins prayogasāra (K) and a ditto

II 297 (I) in a MS belonging to the India Office (Catologue by Eggeling Vol I, p 87) The Vivarana of this chapter is missing equally.

६ °रोहण G B

७ प्रथमम् om K

८ °रोहयेतन G B, °रोहयत K.

| | Rs, | As |
|---|---|---|
| Cri Cantinatha Charita, Fasc 1–4 | 2 | 8 |
| Dāna Kriyā Kaumudī, Fasc 1–2 @ -/10/- each | 1 | 4 |
| *Dasa Rupa (Text), Fasc 2–3 @ -/10/- each | 1 | 4 |
| Dharmabindu, Fasc 1 @ -/10/- each | 0 | 10 |
| Dictionary of the Kashmiri Language, Part I .. | 15 | 0 |
| Gadadhara Paddhati Kālasāra, Vol I, Fasc 1–7 @ -/10/- each | 4 | 6 |
| Ditto Ācārasāra, Vol II, Fasc 1–4 | 3 | 2 |
| Gobhilīya Grhya Sūtra, Vol I | 3 | 2 |
| Ditto Vol II, Fasc 1–2 @ 1/4/- each | 2 | 8 |
| Ditto (Appendix) Gobhila Parisista | 2 | 0 |
| Ditto Grihya Sangraha | 0 | 10 |
| Gopotha Brahman of Atharva Veda (Text and English), Fasc 1–2 @ 1/- each | 2 | 0 |
| Haralata | 1 | 14 |
| Institutes of Vishnu (Text), Fasc 1–2 @ -/10/- each | 1 | 4 |
| Kala Madhava (Text), Fasc 1–4 @ -/10/- each | 2 | 8 |
| Kāla Viveka, Fasc 1–7 @ -/10/- each | 4 | 6 |
| Karmapradiph, Fasc 1 .. | 1 | 4 |
| Kātantra, Fasc. 1–6 @ -/12/- each | 4 | 8 |
| Katha Sarit Sagara (English), Fasc 1–14 @ 1/- each | 14 | 0 |
| Kavi Kalpa Lata, Fasc 1 | 0 | 10 |
| Kavindravacana Samuccayah | 3 | 8 |
| Kiranavali; Fasc 1–3 @ -/10/- | 1 | 14 |
| Kurma Purana, Fasc 1–9 @ -/10/- each | 5 | 10 |
| *Lalita Vistara (Text) Fasc 2–6 @ -/10/- each | 3 | 2 |
| * Ditto (English), Fasc 1–3 @ 1/- each | 3 | 0 |
| Madana Pārijāta, Fasc 1–11 @ -/10/- each | 6 | 14 |
| Mahā-bhāsya-pradīpodyota, Vol I, Fasc 1–9, Vol II, Fasc 1–12, Vol III, Fasc 1–10 @ -/10/- each | 19 | 6 |
| Ditto Vol IV, Fasc 1–3 @ 1/4/- each | 3 | 12 |
| Maitra, or Maitrayaniya Upanishad Fasc 1 | 0 | 10 |
| Manutīkā Sangraha, Fasc 1–3 @ -/10/- each | 1 | 14 |
| Mārkandeya Purana (English), Fasc. 1–9 @ 1/- each | 9 | 0 |
| *Markandeya Purana (Text), Fasc 4–7 @ -/10/- each | 2 | 8 |
| *Mimansa Darcana (Text), Fasc 9, 11–17 @ -/10/- each | 5 | 0 |
| Mirror of Composition (English), Fasc 1–4 @ 1/- each | 5 | 0 |
| Mugdhabodha Vyakarana Vol I, Fasc 1–7 @ -/10/- each | 4 | 6 |
| Nirukta (2nd edition), Vol I, Fasc 1–2 @ 1 4/- | 2 | 8 |
| *Nirukta (old edition), Vol I, Fasc 1, 2, 4, 5, 6, Vol II, Fasc 5, 6, Vol III, Fasc 1–6, Vol IV, Fasc 1–8 @ -/10/- each | 13 | 2 |
| Nityācārapaddhati, Fasc 1–7 @ -/10/- each | 4 | 6 |
| Nityācārapradīpa, Vol I, Fasc. 1–8, Vol II, Fasc 1–4 @ -/10/- each | 7 | 8 |
| Nrisinha Tapani of Atharva-Veda (Text), Fasc 1–3 @ -/10/- each | 1 | 14 |
| Nyāyabindutīkā, Fasc 1 @ -/10/- each | 0 | 10 |
| Nyaya Vartika Tatparya Parisudhi, Fasc 1–4 @ -/10/- each | 2 | 8 |
| *Nyayavartika (Text), Fasc 2–7 @ -/10/- each | 3 | 12 |
| Nyayasarah | 2 | 0 |
| Padumāwati, Fasc 1–6 @ 2/- each | 12 | 0 |
| *Parāçara Smrti, Vol I, Fasc 2–8, Vol II, Fasc. 1–6; Vol III, Fasc. 1–6 @ -/10/- each | 11 | 14 |
| Parāçara, Institutes of (English) @ 1/- each | 1 | 0 |
| *Paricista Pravan (Text), Fasc 5 @ -/10/- each | 0 | 10 |
| Pariksamukha Sutram | 1 | 0 |
| Prabandhacintāmani (English), Fasc 1–3 @ 1/4/- each | 3 | 12 |
| Prākrita-Paingalam, Fasc. 1–7 @ -/10/- each | 4 | 6 |
| Prakrita Lakshanan | 1 | 8 |
| Prthviraja Vijaya, Fasc 1 | 0 | 10 |
| Rasarnavam, Fasc 1–3 | 3 | 12 |
| Ravisiddhanta Manjari, Fasc 1 | 0 | 10 |
| Saddarśana-Samuccaya, Fasc 1–3 @ -/10/- each | 1 | 14 |
| Sadukti-karna-mrita, Fasc 1 @ -/10/- each | 0 | 10 |
| Samaraicca Kaha, Fasc 1–7 @ -/10/- each | 4 | 6 |
| *Samavada Sanhita, Vol I, Fasc 1–4 6–10; Vol. 2, Fasc 2–6, Vol 3, Fasc. 1–7; Vol 4, Fasc 1–6; Vol 5, Fasc 1–8 @ -/10/- each | 21 | 14 |
| *Sankara Vijaya (Text), Fasc 2–3 @ -/10/- each | 1 | 4 |
| *Sankhya Aphorisms of Kapila (English), Fasc 2 | 1 | 0 |
| *Sankhya Pravachana Bhashya, Fasc 2 | 0 | 10 |
| Sānkhya Sūtra Vrtti, Fasc 1–4 @ -/10/- each | 2 | 8 |
| Ditto (English), Fasc. 1–3 @ 1/- each | 3 | 0 |
| Siva Parinahya, Fasc 1–2 | 1 | 4 |
| Six Buddhist Nyaya Tracts | 0 | 10 |
| Smriti Prakasha Fasc 1 | 0 | 10 |
| | 3 | 12 |

| | | Rs | As |
|---|---|---|---|
| | Srauta Sutra of Latyayana (Text), Fasc. 1–9 @ -/10/- each | 5 | 10 |
| | Sri Surisarvasvam, Fasc 1–3 @ -/10/- each | 1 | 14 |
| | Suçruta Samhitā (English), Fasc 1 @ 1/- each | 1 | 0 |
| | Suddhi Kaumudī, Fasc 1–4 @ -/10/- each | 2 | 8 |
| | Sundaranandam Kavyam | 1 | 0 |
| | Suryya Siddhanta, Fasc 1–2 @ 1/4 - each | 2 | 8 |
| | Syainika Sastra | 1 | 0 |
| | *Taittereya Samhita (Text), Fasc 17–45 @ -/10/- each | 18 | 2 |
| II 247 | *Taittiriya Aranyaka of Black Yajur Veda (Text), Fasc 5–11 @ -/10 - each | 4 | 6 |
| | Taittiriya Brahmana (Text), Fasc 1–24 @ -/10/- each | 15 | 0 |
| | Taittiriya Pratisakhya (Text), Fasc 1–3 @ -/10/- each | 1 | 14 |
| | *Tandya Brahmana (Text), Fasc 13–18 @ -/10/- each | 3 | 12 |
| II 247 | Tantra Vārtika (English), Fasc 1–14 @ -/1/4 | 17 | 8 |
| | *Tattva Cintāmani, Vol I, Fasc 2–9, Vol II, Fasc 4–10, Vol III, Fasc 1–2; Vol IV, Fasc 1, Vol V Fasc 1–5, Part IV, Vol II, Fasc 1–12 @ -/10/- each | 21 | 14 |
| | Tattva Cintamani Didhiti Prakas, Fasc 1–6 @ -/10/- each | 3 | 12 |
| | Tattva Cintamani Didhiti Vivriti, Vol I, Fasc 1–8, Vol II, Fasc. 1–8, Vol III, Fasc 1 @ -/10/- each | 7 | 8 |
| | Tattvarthadhigama Sutram, Fasc 1–3 @ -/10/- each | 1 | 14 |
| | *Tattvarthadhigama Sutram, Fasc 2–3 @ -/10/- each | 1 | 4 |
| | Tirthacintamoni, Fasc 1–4 @ -/10/- each | 2 | 8 |
| II. 247 1 | Trikānda-Mandanam, Fasc 1–3 @ -/10/- | 1 | 14 |
| | Tul'si Satsai, Fasc 1–5 @ -/10/- | 3 | 2 |
| | Upamita-bhava-prapañca-kathā, Fasc 1–14 @ /10/- each | 8 | 12 |
| | *Uttara Naishadha (Text), Fasc 6–12 @ -/10/- each | 4 | 6 |
| | Uvāsagadasāo (Text and English), Fasc 1–6 @ 1/- | 6 | 0 |
| | Vajjalaggam, Fasc 1 | 0 | 10 |
| | Vallāla Carita, Fasc 1 @ -/10/- | 0 | 10 |
| | *Varaha Purana (Text), Fasc 2–14 @ -/10/- each | 8 | 2 |
| II 248 | Varsa Kriyā Kaumudī, Fasc 1–6 @ -/10/- | 3 | 12 |
| | Vayu Purana (Text), Vol I, Fasc 1–6, Vol II, Fasc 1–7 @ -/10/- each | 8 | 2 |
| | *Vedanta Sutras (Text), Fasc 7–13 @ -/10/- each | 4 | 6 |
| | Vidhāna Pārijāta, Fasc 1–8, Vol II, Fasc 2 @ -/10/- | 5 | 10 |
| | Ditto Vol II, Fasc 2–5 @ 1/4/- | 5 | 0 |
| II 248 | Ditto Vol III, Fasc 1 | 0 | 10 |
| | Vishahitam, Fasc 1 | 0 | 10 |
| | Vivādaratnākara, Fasc 1–7 @ -/10/- each | 4 | 6 |
| | Vrhat Svayambhū Purāna, Fasc 1–6 @ -/10/- | 3 | 12 |
| | *Vrhannaradiya Purana (Text), Fasc 3–6 @ -/10/- each | 2 | 8 |
| | Yogaśastra, Fasc 1–3 | 3 | 12 |
| | Yoga Sutra of Patanjali (Text and English), Fasc 1–4 @ 1,- each | 4 | 0 |

## *Tibetan Series*

| | Rs | As |
|---|---|---|
| Amarakosah, Fasc 1–2 | 4 | 0 |
| Amartika Kamdhenuh | 1 | 0 |
| Bauddhastotrasangraha, Vol I | 2 | 0 |
| A Lower Ladakhi version of Kesarsaga, Fasc 1–4 @ 1/- each | 4 | 0 |
| Nyayabindu (A Bilinguel Index) | 1 | 0 |
| Nyayabindu of Dharmakirti, Fasc 1–2 | 2 | 0 |
| Pag-Sam Shi Tin, Fasc 1–4 @ 1/- each | 4 | 0 |
| Prajna Pradipah | 1 | 0 |
| Rtogs *b*rjod *d*pag *h*khri Śiñ (Tib & Sans Avadāña Kalpalatā) Vol I, Fasc. 1–11, Vol II, Fasc 1–11 @ 1/- each | 22 | 0 |
| Sher-Phyin, Vol I, Fasc 1–5, Vol II, Fasc 1–3, Vol III, Fasc. 1–6 @ 1/- each | 14 | 0 |
| Timed-Kun-Din | 1 | 0 |

---

| | Rs | As |
|---|---|---|
| Notice of Sanskrit Manuscripts, Fasc 1–35 @ 1/- each | 35 | 0 |
| Ditto ditto (Palm-leaf and selected paper MSS ) @ 3/- each | 6 | 0 |
| Nepalese Buddhist Sanskrit Literature, by Dr. R L. Mitra | 5 | 0 |
| Report on the Search of Sanskrit MSS , 1895-1900, 1901-1905, and 1906-1911 @ -/8/- each | 1 | 8 |

N.B.—All Cheques, Money Orders, &c , must be made payable to the "Treasurer, Asiatic Society," only.

# BIBLIOTHECA INDICA:

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL

NEW SERIES, No 1428.

# बौधायन श्रौतसूत्रम् ।

# BAUDHĀYANA ŚRAUTA SŪTRAM

A SANSKRIT WORK ON THE VEDIC LITERATURE.




EDITED BY

DR W CALAND,

UTRECHT

VOL. III. FASCICULUS III.

CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY, 1, PARK STREET.

1919

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

**No. 1, PARK STREET, CALCUTTA,**

AND OBTAINABLE FROM

*The Society's Agent—*

MR. BERNARD QUARITCH, 11, *Grafton Street, New Bond Street, London, W.*

*Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | Rs | As |
|---|---|---|
| Açvavaidyaka, Fasc. 1–5 @ -/10/- each | 3 | 2 |
| Advaitachintā Kaustubha, Fasc. 1–3 @ -/10/- each | 1 | 14 |
| *Agni Purana (Text), Fasc 4–14 @ -/10/- each | 6 | 14 |
| *Aitareya Aranyaka of Rig-Veda (Text), 2–4 @ -/10/- each | 1 | 14 |
| Aitarēya Brāhmana, Vol I, Fasc 1–5, Vol II, Fasc 1–5, Vol. III, Fasc 1–5, Vol IV. Fasc 1–8 @ -/10/- each | 14 | 6 |
| Aitareyalocana | 2 | 0 |
| Amarakosha, Fasc 1–2 | 4 | 0 |
| *Anu Bhasyam (Text), Fasc 2–5 @ -/10/- each | 2 | 8 |
| Anumana Didhiti Prasarini, Fasc 1–3 @ -/10/- each | 1 | 14 |
| *Aphorisms of Sandilya (English), Fasc 1 @ 1/- | 1 | 0 |
| Astasāhasrikā Prajñāpāramitā, Fasc 1–6 @ -/10/- each | 3 | 12 |
| *Atharvana Upanishads (Text), Fasc 2–5 @ -/10/- each | 2 | 8 |
| Ātmatattvaviveka, Fasc 1–2 | 1 | 4 |
| Avadāna Kalpalatā (Sans and Tibetan), Vol I, Fasc 1–13, Vol II, Fasc 1–11 @ 1/- each | 24 | 0 |
| Bālam Bhattī, Vol I, Fasc. 1–2, Vol II, Fasc. 1 @ -/10/- each | 1 | 14 |
| Bauddhastotrasangraha | 2 | 0 |
| Baudhāyana Śrauta Sūtra, Fasc 1–3, Vol II, Fasc 1–5; Vol. III, Fasc. 1–2 @ -/10/- each | 6 | 4 |
| *Bhamati (Text), Fasc 5–8 @ -/10/- each | 2 | 8 |
| Bhasavritty | 0 | 10 |
| Bhātta Dīpikā, Vol I, Fasc 1–6, Vol. II, Fasc 1–2 @ -/10/- each | 5 | 0 |
| Bodhicaryāvatāra of Çāntideva, Fasc 1–7 @ -10- each | 4 | 6 |
| Brahma Sutras (English), Fasc 1 @ 1/- | 1 | 0 |
| Bṛhaddevatā, Fasc 1–4 @ -/10/- each | 2 | 8 |
| Bṛhaddharma Purāna, Fasc 1–6 @ -/10/- each | 3 | 12 |
| Çatadūsanī, Fasc 1–2 @ -/10/- each | 1 | 4 |
| Catalogue of Sanskrit Books and MSS, Fasc 1–4 @ 2/- each | 8 | 0 |
| *Çatapatha Brāhmana, Vol I, Fasc 1–7; Vol II, Fasc 1–5; Vol. III, Fasc 1–7, Vol V, Fasc 1–4 @ -/10/- each | 14 | 6 |
| Ditto Vol. VI, Fasc 1–3 @ 1/4/- each | 3 | 2 |
| Ditto Vol VII, Fasc 1–5 @ -/10/- | 3 | 2 |
| Ditto Vol IX, Fasc 1–2 | 1 | 4 |
| Çatasahasrikā prajñāpāramitā, Part I, Fasc 1–18, Part II, Fasc 1 @ -/10/- each | 11 | 14 |
| *Caturvarga Chintāmani, Vol II, Fasc 4–25, Vol. III, Part I, Fasc 1–18, Part II, Fasc 1–10; Vol IV, Fasc. 1–6 @ -/10/- each | 35 | 0 |
| Ditto Vol IV, Fasc 7 @ 1/4/- each | 1 | 4 |
| Ditto Vol. IV, Fasc 8–10 @ -/10/- | 1 | 14 |
| Çlokavartika (English), Fasc 1–7 @ 1/4/- each | 8 | 12 |
| *Çranta Sutra of Apastamba (Text), Fasc. 6–17 @ -/10/- each | 7 | 8 |
| *Çranta Sutra of Çānkhāyana, Vol I, Fasc. 1–7; Vol II, Fasc 1–4, Vol. III, Fasc. 1–4; Vol. IV, Fasc 1 @ -/10/- each | 10 | 0 |
| Çri Bhashyam (Text), Fasc. 1–3 @ -/10/- each | 1 | 14 |

शालाया इति ॥ प्राकृतेन[1] प्रक्रमेण मौयान्मध्ये गार्हपत्य इति ॥ सूत्रं बौधायनस्यात्रो ह स्माह शालीकिः त्रिपदेन प्रक्रमेण सर्वत इति । ॥

त्रिवृत्प्राच्यां दिशि भवति पञ्चदशो दक्षिणतः सप्तदशः पश्चादेकविंश उत्तरतः । सर्वतो वा ज्योतिष्टोमः[2] सर्वं[3] ज्योतिष्टोमदक्षिणा इति ॥

प्रवर्ग्यस्य करण[4] इति ॥ सूत्रं बौधायनस्य ॥ नोक्थ्ये[5] प्रवृञ्ज्यादिति शालीकिः । ॥

याजमान इति ॥ अभौनाम[6] याजमानं कुर्यादिति बौधायनः ॥ कुर्याद्यथावकाशं याजमानमिति शालीकि॥र्य ऽग्निसंस्काराः[7] स्तुतास्कामभितरत्तन्त्रेणेत्यौपमन्यवः[8] । ॥

अग्न्यन्वाधान इति ॥ सूत्रं बौधायनस्यात्रो ह स्माह शालीकिर्गार्हपत्यः[9] सकृदन्वाहितः स्याद्ग्रामयोनिरन्वाहार्य-

१ प्रक्र॰ U K I

२ ॰म. B G, ॰मा. U K I

३ Thus I, सर्वं K सर्वतो U, सर्वतो वा B G

४ प्रकरण U K I

५ नोक्थे B G

६ अभिनाम B G, but cp XX 18 39 11, the other MSS om this word

७ ॰संस्कारार्था U

८ तान om B G, instead of तान्कामम् U तस्यांगम् ।

९ ॰पत्यस्य B G

पचन आहवनीयꣳ[1] सकृदन्वाधाय ततो यथार्थं गच्छेदिति[2]। ॥

भक्षण इति ॥ सूत्रं बौधायनस्य ॥ सर्वꣳ समवधाय सकृदेव[3] भक्षयेदिति[3] शालीकिः। ॥

मार्जन इति ॥ सूत्र बौधायनस्य[4] ॥ सकृदेकस्मिन्निति शालीकिः। ॥

लोकाग्नीनाꣳ हरण इति ॥ सूत्रमाचार्ययोर् ॥ त्रो ह स्माह दीर्घवात्स्यः[5] पूर्वस्मिन्नेव याजमानꣳ स्यादिति। ॥

क्रतुपशूनां करण इति ॥ सूत्रं बौधायनस्य ॥ क्रतुपशव ऐकादशिनाश्च विकल्पन्त इति शालीकिः। ॥

समञ्जन इति ॥ सूत्रमौपमन्यवीपुत्रस्य ॥ यावन्त स्तोमास्तावत्कृत्वः प्रचरणा समनक्तीति बौधायनः[6]। ॥

दधिग्रह इति ॥ सूत्रं मौद्गल्यस्य ॥ पयसा वाज्येन[7] वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः। ॥

अꣳश्वदाभ्ययोर्ग्रहण इति ॥ सूत्रं बौधायनस्य ॥ त्रो ह स्माह

---

१ After ०नीय G ins तत, B त, U K I om आम० नीय and read स्यात्त सकृद० (thus K I), स्यात्सकृद० (thus U)

२ इति inserted by me

३ सकृदेव om B, न G instead of these words,—भक्षयेयुर U

४ मौद्गल्यस्य U K I

५ द्रौप० U K I

६ शालीकिर U K I

७ U K I om the first वा।

शालीकिर्वाजपेये द्वादशाहे सत्त्रे ताण्डिनामयन उद्भिदि वलभिदीति तस्य स्यादित्येवमेव पृश्निग्रहैः प्राणग्रहैरिति[1] ।॥

षोडशिग्रहाणां[2] ग्रहण इति ॥ सूत्र बौधायनस्यानुसवन गृह्णीयुरिति शालीकिः ।॥

अतिग्राह्याणाꣳ होम इति ॥ सूत्रं बौधायनस्य[3] ॥ माहेन्द्रस्यानुवषट्कारमुपजुहुयुरिति शालीकिः[4] ।॥

षोडशिन स्तोत्रमुपाकरोतीति ॥ सूत्र बौधायनस्य ॥ येन केन चिदिति शालीकिः ।॥

हृदयशूलानामुद्वासन इति ॥ एकैकश उद्वासयेदिति बौधायनः ॥ सर्वान्सहेति शालीकिः ।॥

अवभृथ इति ॥ सूत्रं बौधायनस्य[5] ॥ प्राञ्च एवावभृथमवेयुरिति[6] शालीकिः[7] ।॥

---

१ The reconstruction of the text of this dvaidha is wholly uncertain I have given the reading presented by B which, however, has उद्भिद्वलभिद्दिति and adds शालीकि॰ at the end Thus also G. U K I have तांडिनामयने ॥ तांडिणामयन, indicating the beginning of a new kaṇḍikā, moreover the following words run thus in U उद्भिद्वलभिद्दित्येवमेव इश्नि॰ in K उद्दिदि वलभिदि।मित्यवमेव इ॰, in I उद्भिदि वलभिदि लभ्येद्दितिपुलिषिमतिसाध्यानमित्येवमेष इ॰ ।

२ षोडशिना प्र॰ B G

३ शालीकिर् U K I

४ औपमन्यवः U K I

५ शालीके. U K I

६ Thus G, ॰भृथमभ्यवेयु॰ U K I, ॰भृथमवेति B

७ गौतमो U K I

अरण्योः समारोपण[1] इति ॥ सूत्रमाचार्ययोरत्रो[2] ह स्माह गौतमो[3] गृहपतिरेवारण्योः समारोपयेत्तत[4] इतर इति[5] ॥ १९ ॥ दशमः ॥

॥ इति त्रयोविंशः प्रश्नः ॥





१ Thus K I, समारोहण U, समारोह्य B G

२ सूत्र माल्लीकेरत्रो U K I

३ बोधायनो U K I

४ ०रोहये० B G

५ Thus B G, तत इतरे यथार्थं गार्ह्यगेभ्यः U K I.

# कर्मान्तसूत्रम् ॥

पञ्चतयेन कल्पमवेक्षेत छन्दसा ब्राह्मणेन प्रत्ययेन न्यायेन सꣳस्थावशेनेति । छन्दसेति यद्वोचाम यथाम्नायप्रणिधीदं पूर्वमिदमुत्तरमित्यथापि मन्त्र एव स्वयं कर्म प्रब्रूते । कर्मानुवादो भवति । यथैतद्भवति प्रेथमगाद्धिषणा बर्हिरच्छोर्वन्तरिक्षमन्विहि देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामीति । यच्छन्दसा न शक्नुयात्कल्पयितुं ब्राह्मणेन तच्चिकल्पयिषेद्ब्राह्मणमु हैवैनान्मन्त्रानप्रज्ञातान्विदधातीदमनेन करोतीदमनेनेति । यथैतद्भवतीषे त्वोर्जे त्वेति शाखामाच्छिनत्ति वायव स्थोपायव स्थेति वत्सानपाकरोतीत्यथाप्यमन्त्राणि कर्माणि विदधाति । यथैतद्भवत्यष्टासु प्रक्रमेषु ब्राह्मणोऽग्निमादधीतैकादशसु राजन्यो द्वादशसु वैश्य इत्येवं व्यवस्थावर्णसंयोगाद्यथो एतत्प्रत्ययेनेति छन्दोगबह्वृचाध्वर्युप्रत्ययेनेति । यथो एतन्न्यायेनेति प्राकृते तन्त्रे प्राकृतं[1] न्यायमनधिगच्छञ्शास्त्रमन्यायं प्रतीयादयमिहार्हताꣳ समारम्भ इति । यथो एतत्सꣳस्थावशेनेति सोमेऽपवृत्त आदाराꣳश्च फाल्गुनानि चाभिषुणुयादिति । चतुष्टयेन मन्त्रा वर्तन्ते स्तुत्या निर्देशेनाशिषा नैव स्तुत्या नाशिषा न निर्देशेनेति चतुर्थमथेमे पञ्च हविराकारा ओषधं पयः पशुः सोम आज्यमिति । ॥१॥

तेषां पृथक्पृथग्धर्माः पृथगधिकरणानि । यथाधिकरण

१ प्राकृत all exc. D

मन्त्रा दृष्टास्तान्न मिथः सꣳसादयेदनादेश्याद्येनयेन[१] यद्धविः सꣳसिध्येत्तेनतेन तत्कुर्यात्तत्स्याधिकरणमुक्तान्यधिकरणानि । यज्ञ इति । किमुपज्ञो यज्ञः श्रद्धोपज्ञो माङ्गल[२] इति । क उ खलु यज्ञ इति । पुरुष इति । का उ खलु देवता दीक्षेति । वागिति । का उ खलु पथ्या स्वस्तिरिति । [३]वागेवेति । का उ खल्वेकाक्षरा गायत्रीति । वागेवेति । क उ खलु यज्ञस्यारम्भः का प्रतिष्ठेति । विज्ञायते[४] स्वाहा यज्ञं मनसा स्वाहा द्यावापृथिवीभ्याꣳ स्वाहोरोरन्तरिक्षात्स्वाहा यज्ञं वातादारभ इति । वात एव यज्ञस्यारम्भो वातः प्रतिष्ठेति । ॥ २ ॥ **प्रथमः** ॥

कथमु खल्वेतज्जानीयादिदं तन्त्रमयमावाप इत्यग्न्यन्वाधानप्रभृति तन्त्रमाज्यभागाभ्यामन्यत्रौषधात्तस्मिꣳस्तन्त्रे सत्यावापस्थानानि भवन्ति यथैतद्धेनूनां दोहनं कपालानामुपधानꣳ स्तम्बयजुषो हरणमाज्यग्रहा[५] इति यच्च किंचाभिनिवपत्यूर्ध्व-

---

१ Thus H Ben G U D C Vt, Vc, the Viv. (one copy), संसाधये° Be, the Viv (another copy). The meaning, according to Vc., of न मिथः ससादयेत् is न मिश्रयेत् ।

२ Thus C U H G (pr m) Vt Vc and the Viv, मांगलक Ben Be, मांगलिक G (sec m), पांगल D

३ सा ins G U (pr m) H

४ In TS I 2, 2, 3.

५ °ग्रहा Be G U, °ग्राहा Ben D (sec. m), °ग्राहाः H, ग्रहण D (pr m), °ग्रह C, ग्राह Vt.

माज्यभागाभ्यामेष मध्यत आवापो भवति यस्मिन्नेतद्धवीꣳष्योप्यन्ते तस्मिन्नेवावापजानि[1] तन्त्रस्थानं[2] भजन्ते यथैतत्प्राशित्रं यजमानभागब्रह्मभागौ स्विष्टकृच्चेडा चेत्यवदानत आवापो भवति तन्त्रं तु प्रदानतः । क उ खलु तन्त्रमावापभूयं गच्छत्यावापो वा तन्त्रभूयमिति । मैत्राबार्हस्पत्ये ऽप्यन्यस्मिꣳस्तन्त्रमु ह निर्वपणतो भवत्यावाप उ प्रदानतो । ऽथ वारुणीषु[3] च संज्ञानीष्ट्यां[4] चावापो ह निर्वपणतो भवति तन्त्र तु प्रदानतो । ऽनूयाजप्रभृति तन्त्रमा समिष्टयजुषो होमात्किंदेवत्या उ खल्वनूयाजा भवन्तीत्याग्नेया इत्येव ब्रूयाद्विज्ञायते तं देवा आहुतीभिरनूयाजेष्वन्वविन्दन्यदनूयाजान्यजत्यग्निमेव तत्समिन्द्ध इत्यृतुदेवता उ खलु प्रयाजा भवन्तीति । ॥ ३ ॥
द्वितीयः ॥

कियत्यः पाकयज्ञसꣳस्थाः कियत्यो हविर्यज्ञसꣳस्थाः कियत्यः सोमसꣳस्था इति । हुतः प्रहुत आहुतः शूलगवो बलिहरणं प्रत्यवरोहणमष्टकाहोम इति सप्त पाकयज्ञसꣳस्था इत्यपरिमिता उ हैके ब्रुवते । यच्च किं चान्यत्र विहाराद्धूयते सर्वास्ताः पाकयज्ञसꣳस्था इत्यथ हविर्यज्ञसꣳस्था अग्न्याधेय-

---

१ एव om H G U (pr m) C,— ०जानीति G (sec m) U (pr m)

२ Ben Be ins पच ।

३ Thus (sc इष्टिषु) D and C only, वारुणेषु the other MSS

४ Thus Ben C and Vc., सज्ञानीतूष्णीं D, the other MSS and the Viv (one copy) and Vt, संज्ञान्येष्ट्यां, संज्ञानेष्ट्या the Viv (another copy).

मग्निहोत्रं दर्शपूर्णमासावाग्रयणं चातुर्मास्यानि दाक्षायणयज्ञः कौण्डपायिन्य[1] इति । सौत्रामणिमु हैके ब्रुवते । ऽथ सोमसꣳस्था । अग्निष्टोमो ऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयो ऽतिरात्रो ऽप्तोर्याम इति सप्त सोमसꣳस्था । यदग्निष्टोमस्य क्रतुकरणं तदत्यग्निष्टोमस्य । यदुक्थ्यस्य तत् षोडशिवाजपेययोर्यदतिरात्रस्य तदप्तोर्यामस्येति । सप्तानाꣳ सोमसꣳस्थानां द्वे सत्त्राणि न गच्छतो वाजपेयश्चाप्तोर्यामश्चेति । ॥ ४ ॥

कथमु खल्वेतज्जानीयादियं पूर्वा ततिरियमुत्तरेति । या प्रकृतिः सा पूर्वा ततिरथ यद्विदधाति सोत्तरा ततिरग्न्याधेय पूर्वा ततिः पुनराधेयमुत्तरा ततिर्दर्शपूर्णमासाविष्टीनां पूर्वा ततिः सर्वाः काम्या इष्टय उत्तरा ततिरैन्द्राग्नो निरूढपशुबन्धानां पूर्वा ततिः सर्वे काम्याः पशव उत्तरा ततिर्ज्योतिष्टोमः सोमानां पूर्वा ततिः सर्वे सोमा उत्तरा ततिः । श्येनचिदग्नीनां पूर्वा ततिः सर्वे काम्या अग्नय उत्तरा ततिर्द्विरात्रो ऽहीनानां पूर्वा ततिः सर्वे ऽहीना उत्तरा ततिर्द्वादशाहो ऽहर्गणानां पूर्वा ततिः सर्वे ऽहर्गणा उत्तरा ततिर्गवामयनꣳ सांवत्सरिकाणाꣳ सत्त्राणां पूर्वा ततिः सर्वाणि सांवत्सरिकाणि सत्त्राण्युत्तरा ततिः । कियन्ति नु खलु गवामयनानि भवन्तीति । विज्ञायते[2] यथैतन्मासि पृष्ठमुत्तमे

१ कुंडपायिन्य Be, कोंडपायिनम् the Viv (one copy), कौंडपायिमिन D.
२ om M Ben U (pr. m.) D C Vt.

मासि सक्तुपृष्ठान्युपेयुर्दशमास्यं तृतीयꣳ । सप्त ग्राम्या ओषधयः सप्तारण्याः । सप्त ग्राम्याः पशवः सप्तारण्याः । सप्त छन्दाꣳसि चतुरुत्तराणीति । सप्त ग्राम्या ओषधयस्तिलमाषव्रीहियवाः प्रियङ्गवो ऽणवो गोधूमाः सप्तमे । कुलत्थानु[१] हैके ब्रुवते । सप्तारण्याः श्यामाकाश्च नीवाराश्च जर्तिलाश्च गवीधुकाश्च गार्मुताश्च वास्तानि[२] च वेणुयवाश्च सप्तमे । कुरुविन्दानु हैके ब्रुवते । सप्त ग्राम्याः पशवो गोश्वमजाविकं पुरुषश्च गर्दभश्चोष्ट्रश्च सप्तमे । ऽश्वतरमु हैके ब्रुवते । सप्तारण्या द्विखुराश्च श्वापदानि च पक्षिणश्च सरीसृपाणि च हस्ती च मर्कटश्च नादेया सप्तमे । सप्त छन्दाꣳसि चतुरुत्तराणीति गायत्र्युष्णिगनुष्टुब्[३] बृहती पङ्क्तिस्त्रिष्टुब्जगतीति । ॥ ५ ॥ तृतीयः ॥

अथेदं त्रयं भवति कर्माभ्यावर्ति देवताभ्यावर्ति संख्याभ्यावर्तीति । सावित्रं नु खल्विदं कर्माभ्यावर्ति भवत्यथ देवताभ्यावर्ति ध्रुवाज्यं द्रोणकलशः सर्वपृष्ठेत्यथ[४] संख्याभ्यावर्ति त्रिः पृच्छति शृतꣳ हवी३ः शमितरित्यथापि राज्ञो मानं । क उ खलु मन्त्रमन्तरितं कल्पयेत्स्थानाद्वा स्थानं प्रजिज्ञासीताभिरूप्येण[५] वा प्रौहेण वेति । स्थानात्स्थानमिति यद्वोचाम

---

१ Thus M Be Ben, कुलित्थानु H G (sec m) U D C, कुलुत्थानु Vt

२ वास्त्यानि G (sec. m.), वास्तानि D C According to the Viv वास्तुकम् (Chenopodium) is meant

३ ०ष्टुग् M only

४ *i e* सर्वपृष्ठाख्या काम्येष्टि॰ (Vc), cp. TS. II 3, 7, 1.

५ प्रजिज्ञासेत U, ॰षित Vt Vc Ben.

यो ऽनन्तरो मन्त्र आम्नातः स्यात्तेनैनꣳ सह कल्पयेत्पूर्वकालेन वोत्तरकालेन वेति । यथो एतदाभिरूप्येणेति यथैतद्भवत्याशासानः सुवीर्यꣳ रायस्पोषꣳ स्वश्वियम् । बृहस्पतिना राया स्वगाकृतो मह्यं यजमानाय तिष्ठेति । यथो एतत्प्रौहेणेत्यग्निकल्पः खल्वयमिष्टकाभूयान्समाम्नातस्तं च[1] यो मन्त्रो ऽन्तरितः स्यादिष्टकाभूयमेनमापादयेत् । ॥ ६ ॥

अथायमश्वमेध आकृतिभूयान्समाम्नातस्तं च यो मन्त्रो ऽन्तरितः स्यादाकृतिभूयमेनमापादयेन्नाप्रक्रान्तं प्रक्रमयेन्न प्रक्रान्तं कर्म तूष्णीं कर्मणाभिपूरयिषेदिति । नाप्रक्रान्तमिति यदवोचाम बर्हिर्लवनः खल्वयꣳ ह्रस्वो मन्त्र आम्नातो भवति दीर्घमु कर्म । न कर्मणो हेतोर्मन्त्रो ऽभिनिवर्तेताथायं पशोर्विशसनो ह्रस्वो मन्त्र आम्नातो भवति दीर्घमु कर्म । न कर्मणो हेतोर्मन्त्रो ऽभिनिवर्तेताथास्याꣳ स्वयमातृण्णायां दीर्घो ह मन्त्र आम्नातो भवति ह्रस्वमु कर्म । न कर्मणो हेतोर्मन्त्रो विरम्येद्यथो[2] एतत्त्रियजुषा सक्तूष्णीमिति । लोकाग्नीꣳश्च तेषामुपश्रुत्य स्तम्बयजुश्चेति । यथो एतत्पञ्चकृत्वो यजुषा

१ अयम् given by Ben D C U (pr m) Vt, om by H Be G U (sec m).—On इष्टकाभूयान् V comments इष्टकाभिर्भूयान् बहुलः इष्टकोपधानप्रचुर इति यावत् ।

२ Thus Be G U Vt Vc, विरम्येतयथो Ben C D, विरम्येत यथो H, V comments न विरम्येत् न विरमेत् विकरणव्यत्ययश्छान्दसः ।

पञ्चकृत्वस्तूष्णीमिति राज्ञस्तेषां मानमुपश्रुत्येति । [1]अथो एतत्सकृद्यजुषा सकृत्तूष्णीमिति राज्ञ एव[2] तेषां[2] मानमुपश्रुत्येति[1] । अथो एतच्चतुरो मुष्टीन्व्रीहीणां निर्वपतीति द्वौ देवतायै स्विष्टकृते तृतीय इडायै चतुर्थ इति सर्व एवैतेषां ब्राह्मणवन्तः । ॥ ७ ॥ चतुर्थः ॥

अथात आदेशकारितानि व्याख्यास्यामो । ऽनादिष्टो ऽग्नि।रपि तु यथैतद्भवत्यधिदेवने जुहोति रथमुखे जुहोति रथनाभ्यां जुहोति चतुष्पथे जुहोति वर्त्मनोर्जुहोत्याश्वने जुहोति पदे जुहोत्यजायां जुहोत्यजस्य दक्षिणे कर्णे जुहोत्यजस्य दक्षिणे शृङ्गे जुहोति ब्राह्मणस्य दक्षिणे हस्ते जुहोति दर्भस्तम्बे जुहोत्यप्सु जुहोत्यौदुम्बर्यां जुहोति वल्मीकवपायां जुहोत्यौपासने जुहोत्युत्तपनीये जुहोति शामित्रे जुहोत्याग्नीध्रीये जुहोत्यन्वाहार्यपचने जुहोति गार्हपत्ये जुहोती।त्यनादिष्ट[4] आहवनीय एव होतव्य।मनादिष्टो ऽध्वर्यु।रपि तु यथैतद्भवत्युन्नेता जुहोति प्रतिप्रस्थाता जुहोती।त्यनादिष्टे[4] ऽध्वर्युणैव होतव्य।मनादिष्टं पात्र।मपि तु यथैतद्भवत्यञ्जलिना जुहोति

---

१ १ This clause is found in D U Be G (sec. m.) only; it is commented upon by Bhavasvāmin

२ Thus D, एवैषा U Be G, some of the MSS here and supra instead of उपश्रुत्य read उपश्रित्य, which is perhaps the preferable reading, but cp Vc उपश्रुत्य समीपे श्रुतिं कृत्वा ।

३ इति supplied by me

४ इति found in G only.

शूर्पेण जुहोति कृष्णाजिनपुटेन जुहोति मध्यमेन पर्णेन जुहोत्यन्तमेन पर्णेन जुहोत्यर्कपर्णेन जुहोति पर्णमयेन स्रुवेण जुहोत्यौदुम्बरेण स्रुवेण जुहोत्यङ्गुष्ठाभ्यां जुहोति विस्रꣳसिकाकाण्डाभ्यां जुहोति गोमृगकण्ठेन जुहोत्यश्वशफेन जुहोत्ययस्मयेन कमण्डलुना जुहोतीत्यनादिष्टे[1] स्रुचैव होतव्यमनादिष्टा समिदादेशादेव समिधं जानीयाद्विज्ञायते नासमित्के जुहुयाद्यदसमित्के[2] जुहुयाद्यथाजिक्के ऽन्नं दद्यात्तादृक्तत्तस्मात्समिद्वत्येव होतव्यमनादिष्ट उपसमाधायैव होतव्यम् । ॥ ८ ॥

अथातो ऽवदानकल्पश्चतुरन्नयति चतुरवत्तं भवतीत्यनादिष्ट उपहत्यैव होतव्यमनादिष्टꣳ हविरादेशादेवान्यद्व्रीहियवेभ्यो जानीयादपि तु नु खलु क्षिप्रसꣳस्कारतममाज्यं भुवते । ऽनादिष्टः पशुरादेशादेवान्यमजाज्जानीयादैन्द्राग्नायदभिहारं तन्त्रꣳ स्यात्तदभिहारं कुर्यादग्न्यभिहारौ दर्शपूर्णमासौ । सोम इन्द्राभिहारः । सावित्रमौषधस्य निर्वपणं दृष्टं भवति । किꣳ[3] स्वित्सांनाय्यस्य पशो राज्ञ इति । दोहनꣳ सांनाय्यस्योपाकरणं पशोर्यदुपाꣳश्वसवनमभि मिमीते तद्राज्ञः । प्रज्ञातमन्येषाꣳ हविषां पर्यग्निकरणं । किꣳ स्विद्राज्ञ इति । यदेवादो वसतीवरीः परिहरति तद्राज्ञ इति । ॥ ९ ॥

पञ्चमः ॥

---

१ इति missing in G H U D

२ Thus U Ben G D C, जुहुयाद्यदस° Vt, °याद्यदिस° Be, °याद्यस° H

३ Thus Be, the Viv. and V, किम D C, किसु H Ben G U D.

अथातः पुरोडाशान्व्याख्यास्यामः । सर्व एवाग्नेया अष्टाकपाला अन्यत्र पौनराधेयिकात्।सर्व एवैन्द्राग्ना एकादशकपाला अन्यत्राग्रयणाच्च शुनासीरीयाच्च । सर्व एवैन्द्रा एकादशकपाला अन्यत्र शुनासीरीयात्।सर्व एवाग्नीषोमीया एकादशकपाला अन्यत्र श्यामाकात्।सर्व एव पशुपुरोडाशा एकादशकपाला अन्यत्र वायव्याद्।यद्देवत्यः पशुस्तद्देवत्यः पशुपुरोडाशो ऽन्यत्र वायव्याद्भवति । सर्व एवाग्नावैष्णवा एकादशकपाला अन्यत्राध्वरकल्पायै । तत्रैवाष्टाकपालस्य[१] द्वादशकपालस्य भवतः । सर्व एव सावित्रा द्वादशकपाला अन्यत्राश्वमेधिकेभ्य।स्तत्रैवाष्टाकपालस्यैकादशकपालस्य भवतः सावित्रो ऽष्टाकपाल इति च । सर्व एव मारुताः सप्तकपाला अन्यत्राश्वमेधिकानां चातुर्मास्यपशूनां पशुपुरोडाशेभ्यो मारुताच्चैकविंशतिकपालादन्यत्र राजसूयिकात्पञ्चशारदीयानां च पशूनां पशुपुरोडाशेभ्यः । किमनुख्यानि नु[२] खलु ते[३] विलेख्यानि कपालानि भवन्तीति । विज्ञायते[४] वैश्वानरं द्वादशकपालं मृगाखरे भूमिकपालं निर्वपेदित्येतदनुख्यानि भवन्ती।त्यथ पूर्वसंस्थाः । पञ्चप्रयाजस्य

---

१ Thus C Ben U (pr m), ०कपालो H Be G U (sec m)

२ नु H D C V, तु Ben Be G U

३ om H G (sec m), found in Ben Be U D C G (pr m) V According to Vc it stands for तानि Is the word to be cancelled? The Vivarana makes no mention of it.

४ Cp T Br. III, 9, 17, 3

नवप्रयाजश्चैकादशप्रयाजश्चेति प्रयाजाः पूर्वसंस्थाः । पर्यग्नि करणं पशोरुपांश्वभिषवो ऽग्निष्टोमे गवामयने चतुर्विंशमहस्तदपि विज्ञायते तस्य त्रीणि च शतानि षष्टिश्च स्तोत्री यास्तावतीः संवत्सरस्य रात्रय इति । ॥ १० ॥

अथ राजयज्ञा । राजसूयो ऽश्वमेधः पुरुषमेधः सर्वमेधः सोमसवः पृथिसवो[1] मृत्युसवः कानान्धयज्ञः शुनस्कर्णयज्ञ इति चाथादितिदेवता । अग्न्याधेये त्वेव प्रथमश्चरुश्चातुर्मास्येषु द्वितीयः । प्रायणीयोदयनीययोरग्निहोत्रण्यायां । त्रयो राजसूये रत्निमानेषु[2] च प्रायुजेषु चादित्यां मल्हां गर्भिणीमालभत इति चैक इष्टिकल्प । एको व्रात्यस्तोमे । चत्वारो ऽश्वमेधे ऽदित्यै विष्णुपत्न्यै चरुरदित्यै हंससाचिरदित्यै त्रयो रोहितैतास्तिस्रो मेध्य आदित्या । द्वौ सौत्रामण्यामादित्याविर्वशा । यष्टो ऽष्टादश इति च । त्रीणि तन्त्राणि यज्ञमन्वायत्तानि भवन्ति पञ्चप्रयाजं नवप्रयाजमेकादशप्रयाजमिति । पञ्चप्रयाजेन दर्शपूर्णमासौ काम्या इष्टय इति वर्तन्ते । नवप्रयाजेन चातुर्मास्यान्येकादशप्रयाजेन पशुः सोम इति । षडिमानि सर्वकल्पे सर्वाभिप्रायिकाणि भवन्ति । यथैतदग्न्याधेय-

---

१ पृथिवीसवो or पृथिविसवो all, cp XVIII 6

२ Thus H Ben D C V, रत्निनेषु G Be U the Viv (one copy), रत्निनिषु the Viv. (another copy) Read probably रत्निनीषु (sc. इष्टिषु)

मग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोम इति । तदपि विज्ञायते ऽथ यदस्याग्निमुद्धरति सहस्रं तेन कामदुघा[1] अवरुन्द्धे[1] । ऽथ यदग्निहोत्रं जुहोति सहस्रं तेनैषा वै वैश्वदेवस्य मात्रैतद्वा एतेषामवममतोऽतो वा उत्तराणि श्रेयाꣳसि भवन्ति[2] । सर्वाँल्लोकान्पशुबन्धयाज्यभिजयत्येकस्मै[3] वै कामायान्ये यज्ञक्रतव आलभ्यन्ते । सर्वेभ्यः कामेभ्यः पशुः सोम इति । ॥ ११ ॥ षष्ठः ॥

अग्नीनाधास्यमानः प्रज्ञमात्मानं कुर्वीत । येनास्याकुशलꣳ[4] स्यात्तेन कुशलं कुर्वीत । यान्यृणान्युत्थितकालानि स्युस्तानि व्यवहरेदनुज्ञापयीत वाथाप्यग्न्याधेय एवलिङ्गां वरणं प्रथममुदाहरामस्तस्य चेत्पूर्वे पुरुषैर्वृताः स्युस्तानेव नातिवृणीताव्यवच्छिन्नाश्चेत्कौलेनाध्ययनेन मानुषेण शीलवृत्ताभ्याꣳ स्युरिति । किंगत उ खल्वतिवरणं वावरणं वा भवतीति । स्तेयमचारी-

---

१ Thus Be G (sec m ), °दुघोवरु° U D C H V, दुघावरु° Ben G (pr m.).

२ भवंतीति C Ben

३ After °जयति Be and G(sec. m ) ins इति ।

४ Thus (and cp XXV 4 init ) U G D C Be and the Viv (one copy), येनास्य कुशलं H Ben V and the Viv (another copy) The Vivarana runs येनास्याकुशलं स्यात् चमादिना तेन साम्यं कुर्वीत, the Bhāsya of Venkateśvara येनास्य कुशलं स्यात् तेन सभारो नास्ति तं संपादयेदित्यर्थः ।

दभ्यमऽस्थादयाज्यमयाजयत्सादितं[1] कर्म तद्‌ ह्यास्थित[1] इत्येतेषामेकस्मिन्नतिवरणं वावरणं वा भवतीति । ताऽस्वे- द्वृणीताव्यापन्नाङ्गानेव वृणीत । कं नु खल्वेषां प्रथमं वृणीत । यो ऽस्य सऽस्तुततमः[2] स्यात्तं प्रथमं वृणीत । तेन सचिवेनान्यानिच्छेत । यद्यु वै यथाज्येष्ठं ब्रह्माणं प्रथमं वृणीताथ होतारमथोद्गातारमथाध्वर्युं । ब्रह्मणो वानन्तर- मध्वर्युं । पूर्वं वोत्तरं वा यथाक्रमं चेत्स्यात्सृष्टेन धनेनर्त्विजः प्रतिसंवसीत । औष्यधिकरणान्यृत्विजां विनापि[3] यच्छे[3]

---

१ Thus (अभ्यमऽस्थात्) all I guess this word to be a corruption from an original अभ्यमऽस्त । The commentaries find the word अम 'sickness' in it V आभिमुख्येन रोगवत् बाधकत्वेन स्थितः । The Viv आत्मानं (var अग्नेन) जिघांसति । अम रोगे । आभिमुख्येन रोगभूत (var रोगहत) स्थितवति । अभ्यमंस्था इति लेट् सिचः (var लेडचः) रोगत्वेन स्थितः ।— सादितं all the MSS exc Be (सात), G (sec m सोदं) and U C (यत्कुत्सितं), कुत्सितं, however, seems to be the periphrase of our word in the commentaries, V सादितं कुत्सितं कर्म सेवाभिचारयजनादि । Perhaps the original reading of our passage has been लेयमचारी- दभ्यमऽस्थायाज्यमयाजयद्यत्सादितं कर्म तद्‌ ह्यास्थितेति । आस्थित 3rd sing root aor med from आतिष्ठते । Moreover instead of the impf. अया- जयत् we expect an aorist

२ सस्तुततमः D and U (sec m)

३ Thus (विनापि यच्छे) all (also Vt, Vc). exc C, which has विना यियच्छे, the correct reading (see the Viv. and the Bhāsya यष्टु- मिच्छामि) seems to be either विना यियचे (see the reading of C) or विनापीयच्छे (इयच्छे for regular इयचे, cp the remark on XXIII, 17; 176, 12),

ऽज्याशिषि[१] भार्यामकर्षीति । को नु खल्वृत्विक्षु धर्म इति । य आचार्य इति । कथमर्हण इति । ॥ १२ ॥

आगमआगम इत्येकमृतुमुखऋतुमुख इत्येकꣳ संवत्सरस्य पार इत्येकं । यज्ञाधिगम इत्येतदपरं । को नु खल्वृत्विजां धर्म इति । न न्यस्तमार्त्विज्यं कुर्यान्नानुध्यातं । नावक्रीतो याजयेन्नावृतो याजयेन्नातिवृतो याजयेन्नानूद्देश्यं[२] याजयेन्न
7. नीतदक्षिणं[३] याजयेन्नापरपक्षे याजयेन्नार्तं याजयेन्न मृतं याजयेन्न त्रिकिल्विनं याजयेन्न परिखातिक्रान्तं[४] याजयेन्नान्तगं

---

१ Thus Be G and U (sec m ) and both copies of the Viv , ज्यसिषि U H Ben, Vt Vc , C corrupt , the Viv राजकुलचोरादिभि• हृतसर्वस्वो ऽस्मि, the Bhāsya राजाद्युपद्रवादिना हृतसर्वस्वो ऽस्मि ॥ On ज्या-शिषि for original ज्यासिषि cp Indog Forsch XVIII 421, M S L XIV 192 See also infra XXIV 18 : 202 2

२ Thus G Ben U D G (pr m ) Vt, and cp T Br III 11 8 8 with the remark of Sāyana a h l , नुदेश्यं Be, the Viv (one copy) , ॰नुद्देश्य G (sec. m ) C, the Viv (another copy) , नूदेश्य H The Viv ऋत्विजा यज्ञे ऽन्यस्मै चोद्दिश्य करोति , the Bhāsya अन्यस्य कुल-मुद्दिश्य स्वयमस्वतन्त्र सन्यो यजति तम् ।

३ Thus (as S'ānkh śrs V 1 10) G C, the Viv , नीचदक्षिण (as Āśv. grhs. I 23 20) the other MSS The Bhāsya (दक्षिणानयनानन्तर यस्य कस्य चिदृत्विजो ऽनुपपत्तौ सत्या तस्यार्त्विज्य न कुर्यादित्यर्थ•) and the Vivarana ( दक्षिणादानोत्तरकालम् ) derive नीत from नयति , it is rather the partic from न्येति , cp नीतस्य XVIII 41 393 7

४ परिघा॰ Be Ben C D V

याजयेन्नान्त्यजं[१] याजयेन्नाननूचानं याजयेदपि वैतेषां[२] तं याजयेद्यः कपालान्युपहन्याद्वृत्तिप्रेप्से वर्तमाने । तदपि दाशतये विज्ञायते ऽवर्त्या शुन आन्त्राणि पेचे न देवेषु विविदे मर्डितारम् । अपश्यं जायाममहीयमानामधा मे श्येनो मध्वाजभारेति । नैतेषामयाज्यः सहस्रदक्षिण इति । ॥ १३

॥ सप्तमः ॥

3 3 ऊषाश्च सिकताश्चेति । ये भस्मरा इवोषाः स्युस्तानाहा-
3 4 रयेदारण्यस्य वराहस्य विहतादाहारयेदारण्यस्याखोरुत्करादा-
हारयेद्यो ऽनुपदासी सूदः स्यात्तत आहारयेत्सूदे ऽविद्यमाने
3 6 कुलीरसुषिरादाहारयेदश्मनिहते ऽविद्यमाने शीतहतमाहा-
3 7 रयेद्वातहतं वा । चित्रियस्याश्वत्थस्येति । येन ग्रामो वा नगरं
3 9 वा नदी वा तीर्थं वा ज्ञायते तत आहारयेदश्वं पूर्ववाह-
मिति । युवानमित्येवेदमुक्तं भवति । त्रीन्हिरण्यशल्कानिति[३] । षडिमान्कारयेत्सौवर्णा[३] उपासनार्था[४] राजता अतिप्रदानार्था ।

---

१ Thus Be, नांतज G D C Viv, Vt, तात्मज H, Ben om the word, the Bhāsya पूर्वोक्त ( sc म्लेच्छ ) देशजातम् । शूद्रस्त्रियासुत्पन्नमित्यन्ये ।

२ Thus H Be U (sec m ) the Viv , चैतेषां Ben G C U (pr m ) and Vc ( अपि च अपि वेत्यर्थः ) ।

३ Uncertain reading H G U (sec m ) Be ( only °शल्कोनिति ) and U ( sec , only शलाकानिति ) read as given in the text , त्रीन्हिरण्य शलका ( शकला D C) न्कारयेत्सौ° Ben D C , षड्हिरण्यशल्कान्कारयेत्सौ° Vt Are we to correct षड्हिरण्यशल्कानिति । त्रीन्सौविमान्कारयेत् ?

४ Thus Ben C H D G (pr m ) Vt, औपास° Be G (sec m.) the Vivarana

